देवाय ॥ ३ ॥ सर्वामरससमूह, स्वामिक संपूजिताय निजिताय ॥ भुवनजनपालनो द्यत,तमाय सततं नमस्तस्मै ॥ ४ ॥ सर्वदुरितौघनाशन, कराय सर्वशिवप्रशमनाय ॥ दुष्टग्रहभूतपिशाच, शाकिनीनां प्रमथनाय ॥ ५ ॥ यस्येति नाममंत्र, प्रधान वाक्योपयोगकृततोषा ॥ विजया कुरुते जनहित, मिति च नुता नमत तं शांतिं ॥ ६ ॥ भवतु नमस्ते भगवति, विजये सुजये परापरैरजिते ॥ अपराजिते जगत्यां, जयतीति जयावहे भवति ॥ ७ ॥ सर्वस्याऽपि च संघस्य, भद्रकल्याणमंगलं प्रददे ॥ साधूनां च सदाशिव, सुतुष्टिपुष्टिप्रदे जीयाः ॥ ८ ॥ भव्यानां कृतसिद्धे, निर्वृतिनिर्वाण जननिसत्त्वानां ॥ अभयप्रदाननिरते, नमोस्तु स्वस्तिप्रदे तुभ्यम् ॥ ९ ॥ भक्तानां जतूनां, शुभावहे नित्यमुपद्यते देवि ॥ सम्यग् दृष्टीनां धृति, रति मति बुद्धि प्रदानाय ॥ १० ॥ जिनशासन निरतानां, शातिनतानां च जगति जनतानाम् ॥ श्री सपत्कीर्तियशो, वर्द्धनि जयदेवि विजयस्व ॥ ११ ॥ सलिलानल विषविषधर, दुष्टग्रहराजरोगरणभयतः ॥ राक्षस रिपुगण मारी, चौरेति श्वापदादिभ्यः ॥ १२ ॥ अथ रक्ष रक्ष सुशिवं, कुरु कुरु शांतिं च कुरु कुरु सदेति ॥ तुष्टिं कुरु कुरु पुष्टिं, कुरु कुरु स्वस्तिंच कुरु कुरु त्वं ॥ १३ ॥ भगवति गुणवति शिवशांतितुष्टीपुष्टीस्वस्तीह कुरु कुरु जनानां ॥ ॐमिति नमो नमो ह्रां, ह्रीं हू हः य. क्षः ह्रीं फुट् फुट् स्वाहा ॥ १४ ॥ एवं यन्नामाक्षर, पुरस्सरं संस्तुता जया देवी ॥ कुरुते शांतिं नमता ( पाठांतरे कुरुते शांतिनिमित्तं ) नमो नमः शांतये तस्मै ॥ १५ ॥ इति पूर्वसूरिदर्शित, मंत्रपदविदर्भितः स्तव शांतेः ॥ सलिलादिभयविनाशी,

शांत्यादिकरश्च भक्तिमताम् ॥ १६ ॥ यश्चैनं पठति सदा, शृणोति भावयति वा यथा-योग ॥ सहि शांतिपदं यायात् ( पाठांतरे शिवशांतिपद यायात् ) सूरि श्रीमान् देवश्च ॥ १७ ॥ उपसर्गाः क्षय यांति, छिद्यंते विघ्नवल्लयः ॥ मनः प्रसन्नतामेति, पूज्यमाने जिनेश्वरे ॥ १८ ॥ सर्वमंगलमांगल्यं, सर्वकल्याणकारणं ॥ प्रधानं सर्वधर्माणां, जैनं जयति शासनं ॥ १९ ॥ इति श्री लघुशांति स्तवः संपूर्णः ॥ ॥ अथ बृहच्छांति स्तवनामकं प्रारभ्यते ॥ भोभो भव्याः शृणुत वचनं, प्रस्तुत सर्वमेतत्, ये यात्रायां त्रिभुवनगुरोरार्हता भक्तिभाजां ॥ तेषां शांतिर्भवतु भवतामर्हदादिप्रभावा, दारोग्य श्रीधृतिमतिकरी क्लेशविध्वसहेतुः ॥ १ ॥ गद्यं ॥ भोभो भव्यलोका इहहि भरतैरावतविदेहसंभवानां समस्ततीर्थकृता जन्मन्यासनप्रकंपानंतरमवधिना विज्ञाय सौधर्माधिपतिः सुघोषा घंटाचालनानंतरं सकलसुरासुरेंद्रैः सह समागत्य सविनय मर्हद्भट्टारकं गृहीत्वा गत्वा कनकाद्रिशृंगे विहितजन्माभिषेकः शांतिमुद्घोषयति यथा ततोऽहं कृतानुकारमिति कृत्वा महाजनो येन गतः स पंथा इति भव्यजनैः सह समेत्य स्नात्रपीठे स्नात्रं विधाय शांतिमुद्घोषयामि तत्पूजायात्रास्नात्रादिमहोत्सवानंतरमिति मत्वा कर्णं दत्वा निशम्यतां निशम्यतां स्वाहा ॐ पुण्याहं पुण्याह प्रीयंतां प्रीयंतां भगवंतोऽर्हंतःसर्वज्ञा सर्व दर्शिनस्त्रिलोकनाथा स्त्रिलोकमहिता स्त्रिलोकपूज्या स्त्रिलोकेश्वरा स्त्रिलोकोद्योतकराः ॥ ॥ ॐ ऋषभअजितसंभवअभिनंदन सुमतिपद्मप्रभ सुपार्श्वचंद्रप्रभसुविधिशीतल श्रेयांस वासुपूज्य विमल अनंत धर्म शांति कुंथु अर मल्लि मुनि सुव्रत नमि नेमि पार्श्व वर्द्धमानांता

जिनाः शांताः शांतिकरा भवंतु स्वाहा ॐ मुनयो मुनिप्रवरा रिपुविजयदुर्भिक्षकांतारेषु दुर्गमार्गेषु रक्षतु वो नित्यं स्वाहा ॥ ॥ ॐ ह्रीं श्रीं धृतिमतिकीर्तिकांतिबुद्धिलक्ष्मी मेधा विद्यासाधनप्रवेशननिवेशनेषु सुगृहितनामानो जयतु ते जिनेंद्राः ॥ ॐ रोहिणी प्रज्ञप्ति वज्रशृंखला वज्रांकुशी अप्रतिचक्रा पुरुषदत्ता काली महाकाली गौरी गांधारी सर्वास्त्रा महाज्वाला मानवी वैरुट्या अछुप्ता मानसी महामानसी षोडशविद्यादेव्यो रक्षतु वो नित्यं स्वाहा ॥ ॐ आचार्योपाध्यायप्रभृति चातुर्वर्ण्यस्य श्रीश्रमणसंघस्य शांतिर्भवतु तुष्टिर्भवतु पुष्टि र्भवतु ॥ ॐ ग्रहाश्चंद्रसूर्यांगारकबुधबृहस्पतिशुक्रशनैश्चरराहुकेतुसहिताः सलोकपालाः सोमयमवरुणकुबेरवासवादित्यस्कंदविनायकोपेताः येचान्येपि ग्रामनगरक्षेत्रदेवतादयस्ते सर्वे प्रीयंतां प्रीयंतां अक्षीण कोश कोष्टागारा नरपतयश्च भवतु स्वाहा ॥ ॐ पुत्रमित्रभ्रातृकलत्र सुहृद्स्वजनसंबंधीबंधुवर्ग, सहिता नित्यं चामोद प्रमोद कारिणः अस्मिंश्च भूमंडलायतननिवासीसाधुसाध्वी श्रावकश्राविकाणां रोगोपसर्गव्याधिदुःखदुर्भिक्षदौर्मनस्योपशमनाय शांति र्भवतु ॥ ॥ॐ तुष्टिपुष्टिऋद्धिवृद्धिमांगल्योत्सवाः सदा प्रादुर्भूतानि पापानि शाम्यंतु दुरितानि शत्रवः पराङ्मुखा भवतु स्वाहा ॥ श्रीमते शांतिनाथाय, नमः शांति विधायिने ॥ त्रैलोक्यस्यामराधीश, मुकुटाभ्यर्चितांघ्रये ॥ १ ॥ शांतिः शांतिकरः श्रीमान् शांतिं दिशतु मे गुरुः ॥ शांतिरेव सदा तेषां, येषां शांतिर्गृहे गृहे ॥ २ ॥ उन्मृष्टरिष्टदुष्टग्रहगति दुःस्वप्नदुर्निमित्तादि ॥ संपादितहितसंपन्नामग्रहणं जयति शांते ॥ ३ ॥ श्री संघ जग-

जानपद, राजाधिपराज्यसन्निवेशानाम् ॥ गोष्ठिकपुरमुख्यानां, व्याहरणैर्व्याहरेच्छांतिम् ॥४॥ श्रीश्रवणसंघस्य शांतिर्भवतु, श्रीपौरजनस्य शांतिर्भवतु, श्रीजनपदानां शांतिर्भवतु, श्री राजाधिपानां शांतिर्भवतु, श्रीराजसन्निवेशानां शांतिर्भवतु, श्रीगोष्ठिकानां शांतिर्भवतु, श्रीपुरमुख्याणां शांतिर्भवतु, श्रीब्रह्मलोकस्य शांतिर्भवतु, ॐस्वाहा ॐस्वाहा ॐ श्रीपार्श्व नाथायस्वाहा ॥ ॥ एषा शांतिप्रतिष्ठा यात्रास्नात्राद्यवसानेषु शांतिकलशं गृहीत्वा कुकुमचंदनकर्पूरागरुधूपवासकुसुमांजलिसमेतः स्नात्रचतुष्किकायां श्रीसंघसमेतः शुचिशुचि वपुः पुष्पवस्त्रचंदनाभरणालंकृतः पुष्पमालां कंठेकृत्वा शांतिमुद्घोषयित्वा शांतिपानीय मस्तके दातव्यमिति ॥ ॥ नृत्यंतिनित्यं मणिपुष्पवर्षं, सृजंति गायंति च मंगलानि ॥ स्तोत्राणि गोत्राणि पठंति मंत्रान्, कल्याणभाजोहि जनाभिषेके ॥ १ ॥ शिवमस्तु सर्व जगतः परहितनिरता भवंतु भूतगणाः ॥ दोषाःप्रयांतु नाशं, सर्वत्र सुखीभवंतु लोकाः॥२॥ अहं तित्थयरमाया, सिवादेवी तुह्मनरय निवासिनी ॥ अह्मसिवं तुह्मसिवं असिवो वसमं सिवं भवतु ॥ स्वाहा ॥३॥ उपसर्गाः क्षयं यांति, छिद्यंते विघ्नवल्लयः ॥ मनः प्रसन्नतामेति, पूज्यमाने जिनेश्वरे ॥ ४ ॥ सर्वमंगलमांगल्यं सर्वकल्याणकारणम् ॥ प्रधानं सर्वधर्माणां, जैनं जयति शासनं ॥ ५ ॥ ॥ इति श्रीबृहच्छांतिनामकं स्मरणं संपूर्णः ॥ ॥ अथ श्री कल्याणसागरसूरिकृत माणिक्यस्वामि स्तवन प्रारंभः ॥ नमः सिद्धेभ्यः ॥ स्रग्धरा छंदः॥ स्वामिमाणिक्यपूर्वस्त्रिभुवनतिलकश्चिंतितश्रीसुराद्रि स्त्रैलोक्योद्योतकर्ता प्रथिततरयशा [illegible] ॥ श्रीमद्धीनाभिभूपान्वयगगनरविर्मंजुकल्याणकांति, राष्ट्रेसद्दक्षिणाख्ये

निरुपममहिमाख्यातिकारिप्रतापः ॥ १ ॥ द्रुतविलंबित छंदः ॥ प्रवरधर्मधनार्प्पणका-मगो स्मृतवाग्गुणरंजितनागरः ॥ रिपुसमूहनिवारणप्तटो वृषजचिन्हित पादकुशेशयः ॥ २ ॥ हरिणी छंदः ॥ शुभमतिकरश्चंडादित्याधिकोत्तरभास्वर, स्त्रिभुवनमणिर्विश्वा धारो धरेश्वरकीर्तितः ॥ उपशमरसासक्तस्वांतोऽप्यनतचतुष्टयी, गुणमणिखनिर्नष्टारिष्टा-मयाधिजराव्ययः ॥ ३ ॥ पंचचामर छंदः ॥ अखर्वदेहराजितो यतीश्वरो घृणाप्रशीत-मानसः कलाधरः ॥ अनेकलब्धिमंडितोवृषाकरः शिवाब्धिवृद्धिचंद्रमा नतासुरः ॥ ४ ॥ भुजंगप्रयात छंदः ॥ प्रभुर्मारुदेवश्चिदाल्हादलीनः सदाचारलीलाविला-सातिशाली ॥ महामोहमातंगपंचास्यकक्षो हितार्थी कलाशिल्पविज्ञानभाषी ॥ ५ ॥ मालिनी छंदः ॥ जलधिनिभगभीरः सारसारंगघोषो जितविषयविकारो ज्ञानबुद्धिप्र-दाता ॥ खलसमिरपृदाकुर्देवदेवाधिराजः, समवसरणशोभासिंधुपूरौघमेघः ॥ ६ ॥ नाराच छंदः ॥ श्वेतातपत्रचामरै, र्युक्तोमनोज्ञपुष्पैः ॥ भव्यांगिराशिवंदितो, धर्मार्थमोक्षसा-धकः ॥ ७ ॥ आर्या छंदः ॥ देवैर्ध्येयो विमलःसुंदरवंशोत्तुपूतरात्माऽपि ॥ मान्यः सता-मजस्त्रं सदोदयो वरातिशयधरः ॥ ८ ॥ गीति छंदः ॥ त्रैलोक्यावाप्तविभुः, समस्तगुण रत्नकलित्तसाधुमनाः ॥ एनस्तमोनिशेपः, सुश्लोकैर्धवलिताश आशादः ॥ ९ ॥ नगस्व-रूपिणी छंदः ॥ सदार्यमार्ग देशकोऽप्यमेयभाग्यधारकः ॥ प्रभुतसत्वपालको, विवेक-नीतिकारकः ॥ १० ॥ माणवक छंदः ॥ दुःखहरो नाकिनुत, स्त्यक्तमहादोषभरः ॥ पारगतस्तीर्थंकर, शीलशाली ज्ञानधनः ॥ ११ ॥ तोटक छंदः ॥ कमलाननमोहितसभ्य-

जनः, समयार्थनिरूपणरम्यसुधीः ॥ नृशिलीमुखखेलनतामरसः, पुरुषोत्तमपुण्यनिधिर्वरदः ॥ १२ ॥ मणिमध्य छंदः ॥ लक्षणपंक्त्या सारतनु, र्निर्जितमायालोभकलिः ॥ आदृतसाध्वाचाररतिः, सादरदेवाधीशपतिः ॥ १३ ॥ चंपकमाला छंदः ॥ केवलयुग्मालोकितलोका, लोकविभागः संयमिसेव्यः ॥ इंद्रियबाणाभेदितचेता, श्चंपकमाला मंडितगात्रः ॥ १४ ॥ हंसी छंदः ॥ प्राप्तानंदो भुवनमुकुट, स्तीर्थस्वामी विस्तृतनयनः ॥ सश्रीकात्मा सुकृतनिलयो, योगींद्रो वै विजितकपटः ॥ १५ ॥ शालिनी छंदः ॥ आदेयाख्यो मुक्तिजस्फारसौख्यो, विश्वोत्तंसो दुष्टकर्मारिहंता ॥ चक्रेश्वर्याराधितो गोमुखेशः, कांताकारश्चोत्तमधर्माधिकारः ॥१६॥ केकिरव छंदः ॥ जगतीश पूज्यो जयताज्जिनेशः, कुशलार्थवल्लितति वारिधारः ॥ विशदावदातावलिचित्तनामा, भववार्धिपोतः कुलपाकनाथः॥१७॥ कुलकम् ॥इंद्रवज्राः छंदः॥ एवं मायासंस्तुत आदिदेवो भूयात् सदासंघगणस्यभूत्यै ॥ क्षेमंकरो विश्वजगत्सुदीपः, कल्याणमांगल्यकलापकोशः॥१८॥ इति ॥ ॥ अथ सूर्यपूरीयश्रीसंभवजिनस्तवनप्रारंभः ॥ वसंततिलका छंदः ॥ कामं नमोऽस्तु सततं जिनसंभवाय, चन्द्राननाय कमलामललोचनाय ॥ देहप्रभास्थगितलोकचमत्कराय, दुर्ध्यानपादपविभेदन सिंधुराय ॥ १ ॥ देवैःस्तुस्ताय भवसागरपारगाय, कीर्तिप्रसूनसुरभीकृतविष्टपाय ॥ सन्मूर्तिकांतिततिरंजितमानवाय, सेनागकुक्षिवरशुक्तिकमौक्तिकाय ॥ २ ॥ अब्जोपमाय जिनशासनदीपकाय, सूर्याख्यबंदरमनोरममंडनाय ॥ भव्याब्जकाननविभासन भास्कराय, नानार्थदानहरिचदनसंनिभाय ॥ ३ ॥ आदेयनामकलिताय शुभाशयाय,

[illegible]सुपाय ॥ [illegible]विदाय. नेत्र-प्रभावयश-
[illegible] ॥ ४ ॥ अज्ञानमोहतमसंन्यनपजाय, सौनाग्यनाग्यगुणरत्नकरंडकाय ॥
[illegible]जिनाय, निर्द्धांतदंमरनिंयतनमानमाय ॥ ५ ॥ अज्ञानमंत्रवि-
[illegible], [illegible]तरंगक्षयगाय ॥ श्राग्निचक्रवणांबुधरोपमाय. वाचा
[illegible] ॥६॥ सद्धर्ममार्गविधिदेशनदेशिकाय, दुःखौघवारणमृगेंडपराक्र-
[illegible]चलनपणाय, गंधर्वसंघनसुशोन्नितपत्कजाय ॥ ७ ॥ सस्यौ-
[illegible] जिनाय, शुभान्वयोन्ननिकराय कृपालयाय ॥ मिथ्यात्वतापशशिचंद-
[illegible]जगाय नरार्चिताय ॥ ८ ॥ संकल्प कल्पनविवर्जितमानसाय,
[illegible] ॥ शुज्ञानबुद्धिवरदाय गुणाकराय, कौशल्यवल्लिपरिवर्ध-
[illegible] ॥ ९ ॥ [illegible] ॥ स्तोत्रं चतुर्थ्यंतविन्नक्तिसंयुतं ध्यायंति ये संन्नवदे-
[illegible] सप्तदयः कल्याणसंपादनकामधेनवः ॥ १० ॥ शार्दू-
[illegible] सदावलिनतं श्रीसंन्नवाख्यं जिनं, सन्मार्तंडपुरामलाच-
[illegible] ॥ [illegible] संसेवितं कामदं, मुक्तिस्त्री सुखरंगली-
[illegible] संत्रसुदासिद्धये ॥ ११ ॥ इति ॥ अथ श्रीसुविधिजिनस्तवन प्रारंन्नः ॥ द्रुतविलं-
बित वृत्तः ॥ सुविधिनाथजिनं नयनामृत, सुविधिनाथ जिनं मदिमालयं ॥ सुविधिनाथजिन
नररंजनं, सुविधिनाथजिन वरकेवलं ॥ १ ॥ सुविधिनाथजिनंकमलाकरं, सुविधिनाथजिनं
न्नयद परं ॥ सुविधिनाथ जिनं द्युतिकीर्तिदं, सुविधिनाथजिनं, सुविधिप्रदं ॥ २ ॥ सुवि-

धिनाथ जिनं रजतच्छविं, सुविधिनाथजिनं जडतापहं ॥ सुविधिनाथजिनं मकरांकितं, सुविधिनाथजिन जगदर्चितं ॥ ३ ॥ सुविधिनाथजिनं रजतां हितं, सुविधिनाथजिन परमेश्वरं ॥ सुविधिनाथजिनं श्रुतसूरिणं, सुविधिनाथजिन शिवपारगं ॥ ४ ॥ सुविधिनाथजिनं शुभ्रदर्शनं, सुविधिनाथजिन जनतानतं ॥ सुविधिनाथजिनं वरदं विभुं, सुविधिनाथजिनं नमितासुरं ॥ ५ ॥ अनुष्टुप् छंदः ॥ सितेतरपुराधीशः सुविधिर्नवमो जिनः ॥ संघस्य सुखदो भूयात्, कल्याणसूरिणा स्तुतः ॥ ६ ॥ इति ॥ ॥ अथ श्री शांतिनाथजिनस्तवनप्रारंभः ॥ द्रुतविलंबित छंदः ॥ सकलदेवनरेश्वरवंदितं, विबुध मानवसंस्तुतपूजितं ॥ कमललोचनरंजितनागरं, भविकपातकतामसभास्करं ॥ १ ॥ निखिलवांछितदानसुरागमं, विदितशास्त्रविचारनयागमं ॥ कठिनकर्मदवानलनीरदं, परमशांतिरदामृत शांतिदं ॥ २ ॥ विविधलक्षणरंजितसंचरं, सुविधिमार्गप्रकाशनतत्परं ॥ चपलमत्तमतंगजगामिनं कमलकोमलमांसलपाणिनं ॥ ३ ॥ दलितदंभमहाधृतिविग्रहं, विहितमोहमहाबलिनिग्रहं ॥ दृढपरीषहवायुभुजंगमं, किल शुभं युमभीष्टसमागमं ॥ ४ ॥ भविचकोरसुखाय कलानिधिं, विनयधैर्यगुणोत्कर शेवधिं ॥ मुनिषडन्हिनिवास कुशेशयं, विधुसुधामधुसारतराशयं ॥ ५ ॥ कुसुमसंनिभ दंतविराजित, सुभगभाग्यसुखाकरशोभितं ॥ निजभुजाबलसाधितराष्ट्रक, जितविपक्षगणं नतराजकं ॥ ६ ॥ कुशलकेलिविलासभुवंपरं, विशदकीर्तिविकाशिदिगंतरं ॥ कुमतसिंधुरसिंधुरवैरिणं, सुमति कामितसकृतिकारण ॥ ७ ॥ वरसुवर्णसवर्ण

सुवर्णकं, जितरूपीकमधर्मनिवारकं ॥ हरिणसेवितपादकजं जिनं, हितकरं स्तुत निर्जरसज्जनं ॥ ८ ॥ प्रवरवार्षिकदानगुणैर्वर, हतदरिद्रपरं परमेश्वरं ॥ समधरीकृत मेरुसुरद्रुमैः, प्रचुरसर्वगुणादधिकोत्तमैः ॥ ९ ॥ विकटदुर्जयमन्मथशंकर, जनकला-पिधनं विगतांतरं ॥ लपननिर्जितचंद्रसमप्रभं, विगतदोषकलिं च महौजसं ॥१०॥ अशिव विघ्नघनाघनमारुतं, विषयतापवशं जनतामतं ॥ शिववधूपरिरंभणलोलुपं, विमलके-वलिसाधुकुलाधिपं ॥ ११ ॥ भजतशांतिजिनं तु शिवंकरं, कुशलसागरवृद्धिकला-धरं ॥ अतुलरूपवशीकृतमानवं, प्रणतसादरकिन्नरदानवं ॥ १२ ॥ द्वादशभिः कुल-कम् ॥ मालिनी छंदः ॥ भुवननलिनभानोः शांतिदेवस्य भर्तुं, भवजलनिधिसेतोर्दुःख दारिद्र्यहर्तुः ॥ निजहृदयविशुध्या स्तोत्रमेतत्पठति, प्रतिदिनमपि ये ते संपदः प्राप्नुवंति ॥१३॥ इति अथ शांतिजिनस्तवनप्रारंभः ॥ ॥ स्रग्धरा छंदः ॥ दद्याच्छ्रीशांतिदेवो वर कनकतनुः सारसौख्यानिशश्वद्भक्तानां भक्तिभाजा त्रिभुवननगरेस्फारकोटीरहीरः ॥ चार्वाकारः प्रणेता प्रणतहितकरः कामदो मारिवारः सर्वज्ञाख्यातनामाप्रकटितमहिमा प्राप्तकर्मारिपारः ॥ १ ॥ तोटक छंदः ॥ सुरमानवपूजितपाणिकजः कमलोदयकारक धर्म धनः ॥ विगतामयदूषण जन्मततिः शुभ्रसागरसोमनिभो विमलः ॥ २ ॥ इति प्रथमात विभक्तिकाव्य युग्मं ॥ भुजंगप्रयात छंदः॥ अजय्यं विभुं विश्वपूज्यं प्रसन्नं, जिनं सत्प्रभं शंकरं देवदेवं ॥ सदा ज्ञानवल्लीततौ मेघमेकं, स्तुवे शांतिनाथं कलौ कामकुंभं ॥ ३ ॥ हरिणी छंदः ॥ कमलवदनं प्राप्तानंदं नताशुभचंचलं जगपतिगतिं विश्वाधार

सुरेश्वरवंदितं ॥ सदयहृदयं त्यक्तातंकं विनिर्जित शोचनं परमपददं ज्ञातार्थौघं त्रिकाल-विदंचितं ॥ ४ ॥ इंद्रवंशा छंदः ॥ अर्चंति देवा भवपारगं जिनं, कल्याणकारं मुनिवृंद सेवितं ॥ वज्रादिसल्लक्षणलक्षितं क्षितावानंदसंदोहकरं सुधामयं ॥ ५ ॥ इति द्वितीयांतविभक्तिकाव्यत्रिकं ॥ शालिनी छंदः ॥ प्राज्यं राज्यं चक्रवर्तित्वसंगं त्यक्त्वा दत्वा स्वर्णरूप्यादि दानं ॥ श्रुत्वा वाक्यं ब्रह्मलोकांतिकानां येनावातं संयमं मुक्तियोग्यं ॥ ६ ॥ द्रुतविलंबित छंदः ॥ अमितपुण्यवता जनतावता कुगतिवारणतत्परसद्गिरा ॥ नतनरामरकिन्नरशालिना भगवता भुविशर्मविधायिना ॥ ७ ॥ इति तृतीयांतविभक्ति काव्यद्वयं ॥ इन्द्रवज्रा छंदः ॥ श्रीशांतिदेवाय नमोऽस्तुनेत्रे विघ्नौघ हर्त्रे शिवमार्ग दात्रे ॥ चक्रांकहस्ताय समस्तभर्त्रे शंखेंदुहारोज्ज्वलशुक्लकर्त्रे ॥ ८ ॥ रथोद्धता छंदः ॥ दर्शनामृतनिलीनजंतवे विश्वशास्त्रनयनीतिहेतवे ॥ लोभसागरसुवेलसेतवे द्वापरावलितमिस्रभानवे ॥ ए ॥ इति चतुर्थी विभक्ति काव्य युग्मं ॥ उपेंद्रवज्रा छंदः ॥ अघानि नश्यंति पुराकृतानि प्रशस्त नाम्नातिशय प्रसत्तेः ॥ अनेकसंसारनिबंधितानि प्रगाढ वधस्थितिसंचितानि ॥ १० ॥ मालिनि छंदः ॥ भवति सुखमनंतं शांतिनाथप्रसादा-च्छरणशरणदातुर्विश्वसेनांगजातात् ॥ नतभविकजननां प्रीतिराजात्प्रकामं निरवधि जिनरागे लब्धसन्मानसानां ॥ ११ ॥ इति पंचमांत विभक्तिकाव्यद्वयं ॥ शिखरिणी छंदः ॥ सदाध्यानं शांतेरखिलगुणधाम्नः शुभवतो धरंति श्रीकारं सुमतिमतिकारं भयहरं ॥ नरा भव्याः शक्त्या विगतमदतंद्राः श्रुतपरा स्त्रिसंध्यं सद्ध्यानं प्रबलतरभाग्योदयमतः

॥ १२ ॥ विद्युन्माला छंदः ॥ शांतेः शांतेः पादद्वंद्वं नत्वा नत्वा सश्रीकास्युः ॥ जो जोः श्राद्धा आयुष्मंत स्तुष्ट्यानदं कृत्वा कृत्वा ॥१३॥ इतिपष्ठि विभक्ति काव्यद्विकं ॥ वसंत तिलका छंदः ॥ चेतोऽस्ति चेद्भवपयोनिधिपारमाप्त, तीर्थंकरे जिनपतौ किल शाति देवे ॥ भक्ति कुरुष्व सततं विपुलामुदारा हत्वा प्रमादमपि कर्मविशेषजन्यं ॥ १४ ॥ दोधक छंदः ॥ डुर्गतिसागरपीतसमुद्रे निश्चलसंयमपालनमेरौ ॥ शारद शुभ्र सुधाकरवक्त्रे शंखसमाननिरंजनचित्ते ॥ १५ ॥ नाराच छंदः ॥ कारुण्यरंगरंजिते कार्पण्यदोप वर्जिते ॥ देवाधिपेऽचिरासुते लोकोपकारकर्मठे ॥ १६ ॥ इति सप्तमीविभक्तिकाव्य त्रिकं ॥ वंशस्थ छंदः ॥ स्वकीय वंशांबरभास्करप्रभो, विशाल गंगाजल शुभ्रकीर्ते ॥ अपारसंसारभयाच्च सत्वरं कृपापरस्त्वं परिरक्ष सेवकान् ॥ १७ ॥ इति संबोधन विभक्ति काव्यमेकं ॥ मंदाक्रांता छंदः ॥ कल्याणोक्त कुशलजननं सर्वसंघस्य नित्यं नानावृत्तैः प्रकलितमिदं स्तोत्रमेतत्रिकालम् ॥ मुक्त्वाऽऽलस्यं भणति मनुजो भाविना भावितात्मा गेहेलक्ष्मीर्भवति दृढता तस्य दीर्घायुपश्च ॥ १८ ॥ शार्दूलविक्रीडित छंदः ॥ कल्याणोदधिवर्द्धनं कलिहरं कौशल्यमालास्पद, सौभाग्यौघकरं विभक्तिकलितं कायेविभिन्नैः परं ॥ श्रीशातेः स्तवनं पठंति भविनः सत्पुण्यपण्यालया स्तेषां धाम्नि शुभ्रे निवासमतुलाः कुर्वंति संपत्तयः ॥ १९ ॥ इति ॥ अथ श्री अंतरिक्षपार्श्व स्तवन प्रारंभः ॥ इंद्रवज्रा छंदः ॥ विश्वेश्वरं विश्वजनेशपूज्यं, सर्वार्थनिष्पादनकामकुंभं ॥ प्रख्यातिमंतं महिमौघलक्ष्म्या, पार्श्वं भजे संस्थितमंतरिक्षे ॥ १ ॥ कल्याणमालागृहमंगि देव,

विद्याधराधीशनुतांन्हिपद्मं ॥ सर्वत्रराष्ट्रेपु विशालकीर्तिं, पार्श्वं नजे संस्थितमंतरिद्धे ॥ २ ॥ रोगाधिचिंतार्तिसमूहताप नैषज्यमाचारविचारसूरिं ॥ सन्नीलरत्नविनूपितांगं, पार्श्व०॥३॥ संसारसिंधौवरयानपात्रं, मुक्त्यंगनासक्तहृदं शरण्यं ॥ वामांगजातं जगतीप्रदीपं, पार्श्व० ॥ ४ ॥ श्रीपार्श्वयक्षाधिपमद्वितीयं, श्रीशालिनं सेरपुरावतंसं ॥ वाचासुधार्कार्पितसन्यलोकं, पार्श्व० ॥ ५ ॥ त्रैलोक्यकोटीरमनाथनाथं, दारिद्र्यवाताद्रिमनंतशक्तिं ॥ शास्त्रार्थनैपुण्यनिधिं दयालुं, पार्श्व० ॥ ६ ॥ पद्मावतीसेवितपादयुग्म, मंदोन्नरध्वांतदिनेशमाशु ॥ लावण्यसौनाग्ययशोन्निराढ्यं, पार्श्व०॥ ७ ॥ ज्ञानादिधर्मान्नरणं वरेण्यं, सद्बोधदानादिकमार्ग पाथं ॥ आनंदवल्लीततिवारिधारं, पार्श्व० ॥ ८ ॥ कलशः ॥ स्रग्धराछंदः ॥ इत्थं ये देव वंद्यं विविधसुखकरं चातरिक्षाख्यपार्श्वं, नित्यंध्यायंतिनक्त्या हृदयरतियुजो नाग्यवंतो नरोऽपि ॥ लक्ष्मीस्तेषांनिकाय्ये, वसति दृढतया सर्वदा कामकर्त्री, कल्याणश्रेणिकर्तुर्नुवि विदिततरा सर्वसंपत्तिकाता ॥ ए ॥ इति ॥ अथ श्रीगौडिकपार्श्वाष्टक प्रारंनः ॥ शार्दूलविक्रीमित छंद ॥ वामेयं मरुदेशनूषणतरं श्रीपार्श्वयक्षार्चितं, कल्याणावलिवल्लीसिंचनघनं श्रीक्ष्वाकुवंशोन्नवं ॥ आराज्ञाप्रसमागतैर्नरवरैःसंसेवितं नित्यशः, श्रीमह्रीकरगौम्किान्निधधर पार्श्वसुपार्श्वंनजे ॥ १ ॥ नानासाधुजनौघपंकजवने मार्तंडबिंबायितं, विघ्नव्यूह निवारकं कलियुगे प्राप्तप्रतापालयं ॥ विश्वस्यां प्रथितावदाननिकरं निर्दोषपुण्योज्ज्वलं, श्रीमह्रीकरगौडिकान्निधधरं पार्श्वसुपार्श्वंनजे ॥ २ ॥ संपच्छ्रेणिसुदानकामकलशं त्रैलोक्यचिंतामणिं, सद्वाचामृतरंजितामरनरं सद्धर्मबोधप्रदं ॥ सौनाग्याद्भुतकांतकीर्त्तियशसा संपू-

रिताशांतर, श्रीमन्नू० ॥ ३ ॥ मार्गे चातरन्नीतिवारिनिचिते क्षेमंकरंसर्वदा, दारिद्र्याड्रिनिपातनात्तकुलिशं चितार्त्तिरोगापदं ॥ डखत्रासससमीरणौघन्नुजगं नागाकमंहोमथं, श्रीमन्नू० ॥ ४ ॥ कारुण्याचितचारुचित्तकमलं सत्वेपु संसारिषु, सच्छैर्यादिगुणैरलंकृततनुं लावण्यलीलास्पदं ॥ संसारार्णवपीतवारिधिसमं मुक्त्यंगनावल्लन्नं श्रीमन्नू० ॥ ५ ॥ त्रैलोक्ये तिलकायितं निरुपमं नव्यैर्नृन्निःपूजित, डुष्टाना निजसत्वदर्शनपरं क्षिप्रं सतां कामदं ॥ नाम्नाध्वस्तसमस्तवैरिनिचय राध्शांतनिर्देशकं, श्रीमन्नू० ॥६॥ नूयिष्टामलन्नक्तिशक्तिकलितैर्देवैश्चतुर्धानतं सर्वाशाकरणैककल्पफलदं सर्वांगिचूडामणिं ॥ शिष्टानंत चतुष्टयीवरतरं श्रीमेरुतुंगं जिनं, श्रीमन्नू०॥ ७ ॥ स्फाराकारनिराजितांगमतुलं सद्वर्णहेमाकरं, विश्वव्यासतरं प्रन्नासदनं गन्नीरतासागरं ॥ नासोद्योतितविश्वविश्वमवनौकल्याणसिंधौविधुं, श्रीमन्नू० ॥ ८ ॥ अष्टन्निः कुलकं ॥ अनुष्टप् छंदः ॥ न्निन्नमालेसदाश्रेष्ठे, गुणवव्दन्नूपिते ॥ पुष्पमालेऽतरान्निख्ये नेकवीहारसंयुते ॥ ए ॥ श्रीमत. पार्श्वनाथस्य, स्तवनजगतोऽवनं ॥ कल्याणसागराधीशैः, सूरिन्नीरचितं मुदा ॥ १० ॥ स्रग्धरा छंदः ॥ ध्येयं श्रीपार्श्वदेवं न्नजतकिलजनागोडिकग्रामराजं शश्वत्सर्वार्थसिध्द्यैविहितशुन्नहितं विष्टपेचैत्रपूर्वे ॥ सानंदोल्लासलष्टा. कुशलगविबुधाः सर्वलोकेविशिष्टा निर्दोषाचारपुष्टा जिनपपतिपुरता आप्तकल्याणतुष्टाः ॥ ११ ॥ इति ॥ अथ श्रीगोमीपार्श्वनाथस्तवनप्रारंन्न ॥मालिनी छंदः॥ जयति जगति चञ पार्श्वनामा जिनेंद्रो, विकचकमलदृष्यानंदितामर्त्यमर्त्य ॥ अकलितमहिमौघस्तीर्णसंसारसिंधु, र्नुजगकलितपाद पुण्यपीयूषपुष्ट ॥ १ ॥

स्रग्धरा छंद॥ श्रीपार्श्वं गौडिकाख्यं भजत भविगणे कल्पवृक्षं सुगोत्रं,नानादेशेषु लब्धातिश-
यमहिततात्यूहवारं सुमूर्तिं ॥ श्रीमंतं नीलरत्नाधिकतरवपुषं स्फारलावण्यशालं, मोहांभोरा-
शिकुंभोद्भवममरनुतं पार्श्वयक्षार्चितांह्रिं ॥ २ ॥ पंचचामर छंद ॥ नमंति पार्श्वमंगिनो
नरालसा, धृतातपत्रचामरैः सुरैःस्तुत ॥ अनंतशक्तिमालिनं गतामयं, विवेकरत्नरोहणं
दयाकरं ॥ ३ ॥ वसंततिलका छंदः ॥ ऊरीकृतं व्रतमनुत्तरमंगिनेत्रा, दत्वाऽशु येन वरवा-
र्षिकदानराशि ॥ वामोद्भवेन मुनिनायकनायकेन, कल्याणकेलिनिलयेन शुभाशयेन ॥ ४ ॥
द्रुतविलंबित छंदः ॥मम नमोस्त्वभवते परमात्मने, भगवतेशिवशर्मविधायिने ॥ अमितशौर्य
तिरस्कृतभैरवे, शुभदशेरकमंडलमौलये ॥ ५ ॥ हरिणी छंदः ॥ अमृतरसताधिक्याभीष्टा-
भरोत्तमसंगता, भुवनसुभगात्पार्श्वाभिख्याद्धिनश्यतिपातकं ॥ प्रसरति च वै कीर्तिर्दिक्षु प्रसू-
नवडुज्ज्वला, प्रभवति पुनः शीघ्रं लीलाजयोन्नतिवर्द्धनं ॥ ६ ॥ शार्दूलविक्रीडित छंदः ॥
आकृत्यानरदेवदेवमनुपां संतुष्टिकर्तुस्सदा, चेतोवल्लभकामसार्थददतः कर्मारिहर्तुर्भृशं ॥
आनंदौघसरः प्रवृद्धिकरणे पानीयदातुर्मुदा, पार्श्वस्यास्ति नतिः समृद्धिजननी कल्याणवि-
स्तारिणी ॥ ७ ॥ तोटक छंदः ॥ नरलक्षणभूपितवह्युपुरे, मुखनीरजरंजितविश्वजने ॥
श्रुतदेशनदर्शितधर्मपथे, जिननेतरि तिष्ठति भाग्यरमा ॥ ८ ॥ भुजंगप्रयात छंद ॥
सुराधीशचक्रैः स्तुतः ज्ञानसिंधो, जगन्नाथ नेतःकृपालोकबंधो ॥ विभो पाहि मां सर्वदा भ-
क्तिभाजं, स्मरंत चिरं त्वत्पदांभोजभृगं ॥ ९ ॥ शार्दूलविक्रीडित छंदः॥ स्तोत्रं पार्श्वजिनेश्व-
रस्य सततं ये प्राणिनो भावतः, सद्बुद्ध्यापि पठंति हृद्यमनसस्तेषां गृहे संपदः॥स्युर्नित्यं स्थिर

भावशोभनतरा धर्मार्थनिष्पादिका., कल्याणार्णवसूरिभिर्विचरंतं मांगल्यमालाकरं ॥ १० ॥ शिखरिणी छंदः ॥ सदा धार्यं चित्ते स्तवनमनवद्यं भयहरं, नरैर्नून सिद्ध्यै कुशलवनराजौ घननिभं ॥ अवंध्य भक्तानां जिनगुणरतानां स्मृतिमतां, समेषां भव्यानां प्रमुदकरणं कामितकरं ॥ ११ ॥ इति ॥ अथ श्रीदादापार्श्वनाथस्तवन प्रारंभः॥ इन्द्रवज्रा छंदः ॥ कल्याणगेहं गुणरत्नराजं, सद्देहकांत्याजितनीलरत्नं ॥ स्तोष्येमुदाशंकरमगिवंद्यं दादाभिध श्रीवरपार्श्वनाथं ॥ १ ॥ सद्धर्मलीनाशयमाशुविज्ञं, कर्माष्टदावानल-वारिधारं ॥ संसारपाथोनिधिकर्णधारं, दादाभिधश्रीवरपार्श्वनाथं ॥ २ ॥ आचारवल्ली-ततिवृद्धिनीरं, सत्कीर्तिपुष्पद्रुतवासिताश ॥ नानार्थराद्धांतविचारदक्षं, दादा० ॥ ३ ॥ वैराग्यरंगार्पितचारुचित्त, सद्बोधिदातारमनीहसेव्यं ॥ नागेंद्र संसेवितपादपद्मं, दादा० ॥ ४ ॥ त्रैलोक्यचूडामणिमृद्धिशोभं, सौभाग्यभाग्यावलिपूर्णदेह ॥ भव्यौघराजीवदिनेश मेक, दादा० ॥ ५ ॥ सर्वांगिनेतारमभीष्टवाचं, विश्वेश्वरं रंजितसभ्यलोकं ॥ लोकार्तिचि-तामयङ्खवारं, दादा० ॥ ६ ॥ हृद्याकृतिं कृत्तजराधिदोप, नरामरेंद्रं स्तुतमर्त्यसघं ॥ सन्नागचिन्ह कुशलार्थकारं, दादा० ॥ ७ ॥ सर्वत्रविख्याततरप्रतापं, कारुण्यसत्रं शुवि-शिष्टगोत्रं ॥ अज्ञानमिथ्यात्वतमिस्रदीपं, दादा० ॥ ८ ॥ अष्टभिःकुलकं ॥ शार्दूलवि-क्रीडित छंदः ॥ श्रीमद्भूविटपद्रभद्रनगरे शृंगारहारोपमं, कल्याणांबुजभानुचंद्रमसमं वामां-गजात परं ॥ दादाख्य जिनपार्श्वदेवमनघं ध्यायंति ये नित्यशस्तेषांधाम्नि रमानिवासमनिश कुर्वंति कल्याणतः ॥ ९ ॥ इति ॥ अथ श्रीकलिकुडपार्श्वाष्टकप्रारंभ. ॥ विबुधादिराजेर्नत-

पादपद्मं, बहुभाग्यसौभाग्यलतौघमेघं ॥ कमठोपसर्गाचलधैर्यभित्ति, कलिकुंडपार्श्वं सुचिरं भजेऽहं ॥ १ ॥ कमलाप्रदाने हरिचंदनांगं, सपयोधिदेशाद्भुतलब्धकीर्तिं ॥ रुचिराकृतीरंजितविश्वविश्वं, कलिकुंडपार्श्वं सुचिरं भजेऽहं ॥ २ ॥ महिमावदातोत्तमनाममंत्रं, समताभिरामं कमलाभिनेत्रं ॥ अभिलापदं सिद्धिविलासयंत्रं, कलिकुंड० ॥ ३ ॥ दुरितांधकारारुणसन्निकाशं, करुणाशयं दुःखवनेषुदावं ॥ नरदेवपूज्यं सुखदंसुमूर्तिं, कलिकुंड० ॥ ४ ॥ कनकादिदातारमनंतशक्तिं, वरनीलरत्नाधिकदेहवर्णं ॥ शिवशर्मराजं जनताभिवंद्यं, कलिकुंड० ॥ ५ ॥ अनघं सदासद्गुणकेलिपात्रं, शुभलक्षणालंकृतवर्यगात्रं । कुलभूषणं शत्रुतृणौघदात्रं, कलिकुंड० ॥ ६ ॥ जगतीश्वरं कर्मविमुक्तसंगं, विषमायुधालग्नमनः स्वरूप ॥ धरणेंद्रपार्श्वार्चितपादयुग्मं, कलिकुंड० ॥७॥ शुभसिंधुचंद्रौशशिनं वरेण्य, वचसा सुधाभेन सहर्षसभ्यं ॥ श्रुतसूरिणांपुण्यविराजमानं, कलिकुंड० ॥ ८ ॥ अष्टभिः कुलकं ॥ इंद्रवज्रा छंद ॥ एवंस्तुतः श्रीकलिकुंडपार्श्वः, कल्याणनाम्नामयकानितांतं ॥ ये प्राणिनः स्तोत्रमिदं पठंति तस्माभिलक्ष्मीविलसत्यवश्यं ॥ ९ ॥ इति ॥ अथश्रीरावणपार्श्वाष्टक प्रारंभः ॥ इंद्रवज्रा छंदः ॥ देवाधिदेवं कृतपार्श्वसेवं, नागाधिराजेन नतांह्रिपद्म ॥ पद्मावतीसंस्तुतनामधेयं, सेवे सदा रावणपार्श्वनाथं ॥ १ ॥ आनंदकंदोदयवृद्धिमेघं, मेघध्वनिध्वानविशेषराजं ॥ जितारिवृंदं विगताधिमोहं, सेवे सदा रावणपार्श्वनाथं ॥ २ ॥ वामांगजातं कुलनंदिकारं, ध्वस्तोपसर्गोत्कटदुष्टरोगं ॥ प्रख्यातिमंतं भुवने प्रभावैः, सेवे सदा० ॥ ३ ॥ सन्नीलभासा हसितेंद्रनील, सत्कांतकांत्या रमणीयरूप ॥ प्रावीण्यनानाति-

शयै. प्रधानं, सेवे सदा०॥ ४ ॥ संप्रीतिहर्तारमनंत सौख्यं, विश्वेश्वरं द्योतितविश्वलोकं॥ पद्मार्थदाने सुररत्नवृद्दं, सेवेसदा०॥ ५ ॥ अज्ञानमिथ्यात्वतमिस्रजानुं, जामंडलालंकृतमौलिपृष्टं ॥ वाणीसुधामोदितसव्यसंघं, सेवे सदा० ॥ ६ ॥ कौशल्यमांगल्यनिवासगेहं, पूर्णीकृताजीष्टपदार्थराशिं ॥ त्रैलोक्यदीपं वरसिद्धिजाजं, सेवेसदा०॥ ७ ॥ ससाररत्नाकरयानपात्रं, नि.शेषदोषोझ्झितधर्ममार्गं ॥ आदेयसौजाग्ययश. सुपात्रं, सेवे सदा० ॥ ८ ॥ अष्टजिः कुलकं ॥ मालिनी छंद. ॥ अलवरपुररत्नं रावणं पार्श्वदेवं, प्रणतशुजसमुद्रं कामद देवदेव ॥ अमितगुणनिधाना ये नरः संस्तुवंति, जगतिविदितसारा जाग्यवंतो जवति ॥ ए ॥ इति ॥ अथ श्रीगोमीपुरपार्श्वजिनस्तवनप्रारंजः ॥ ॥ रागेणगीयते ॥ गोडिपुरप्रभुपार्श्वममंद ॥ दर्शनदर्शनपरमानंद ॥ नमित सुरासुरवृंदं ॥ १ ॥ श्रीजिनशासनचारुशृंगारं ॥ अंतरंगरिपुवृत्नकुगारं ॥ सकलजगदाधारं ॥ २ ॥ निरूपमरूपविराजितदेहं ॥ विदलितनानाजनसंदेहं ॥ अमितगुणधनगेहं ॥ ३ ॥ उरितकाननजेदन दात्र ॥ रुचिरलक्षणविजूषितगात्रं ॥ वारितकुमतकुपात्र ॥ ४ ॥ अनघजिनवरगोत्र सुगोत्रं ॥ कामकुंजमणिनिर्जरगोत्रं ॥ संयमदृढतागोत्र ॥ ५ ॥ बेदितजवजयमरणारिष्ट ॥ प्रकटितमहिमातिशयवरिष्टं ॥ जगदैश्वर्यगरिष्टं ॥ ६ ॥ विहिताखिलजविजनकल्याणं ॥ पालितयथाख्यातकल्याणं ॥ दत्तमार्गणकल्याणं ॥ ७ ॥ आधिबंधवधगदहर्तारं ॥ वाछितकुशलसौख्यकर्तारं ॥ जुवनत्रयजर्तार ॥ ८ ॥ विकटकष्टनिवारणगूरं ॥ आगमनयप्रकाशनसूरं ॥ जारतीगंगापूर ॥ ए ॥ धृतिकीर्तिबुद्धिलक्ष्मीगणविश्व ॥ केवलयुगलावोकित

विश्वं ॥ प्राप्तजिनेप्सितविश्वं ॥ १० ॥ सेवकमनोऽभीष्टदातारं ॥ रंजितदेवनरनेतारं ॥ अनुभूतकुलत्रातारं ॥ ११ ॥ इन्द्रनीलमणिवर्णसुवर्णं ॥ निखिलदेशविख्यातसुवर्णं ॥ वाक्सुधासारसुवर्णं ॥ १२ ॥ मुक्तिसीमंतिनीसंगमलुब्धं ॥ चंचलविषयसुखसंगालुब्धं ॥ कर्मपराविप्रलुब्धं ॥ १३ ॥ वंदितामरमौलिकुटीरं ॥ विषमकषायदवानलनीरं ॥ उत्कट परीषहधीरं ॥ १४ ॥ अंचलगणनीरधीसारंगं ॥ कीर्तिलतावर्द्धनसारंगं ॥ दुर्जनशलभसारंगं ॥ १५ ॥ वंदेऽनंतचतुष्टयिराजं ॥ पूजितसुरपतिमानवराजं ॥ प्रवरतीर्थाधिराजं ॥ १६ ॥ षोडशभि: कुलकं ॥ शिवतातिपार्श्ववरदवरपार्श्वं ॥ मोहतमिस्रसवितारं ॥ नागराजराजं त्रिभुवनपूज्यं लब्धभवोदधिपारं ॥ शुभसागरनित्यप्रथितगरिमाणं ये ध्यायंति, विभुं मुदा लक्ष्मीस्तान्समुपैतिसत्वरमतुलासर्वार्थसिद्धिप्रदा ॥ १७ ॥ इति अथ श्रीपार्श्वजिनस्तवनप्रारम्भः ॥ तोटक छंद ॥ भविकांबुजभासनभानुनिभं, भवतापसमावनवारिधरं ॥ रचितागमशास्त्रविचारनयं, जयमंगलकीर्तियशोनिचयं ॥ १ ॥ कमलामलकेलिगृहं विमलं, लसदाशयसुस्मितसंतमसं ॥ शुभसागरवर्द्धनचंद्रमसं, सकलामरपूजितपादकजं ॥ २ ॥ विकटोत्कटकर्ममृगेन्द्ररिपुं, खगनागनरेश्वरदेवनतं ॥ तरसाजितमोहरिपुंविभयं यमसवरसहितसाधुहितं ॥ ३ ॥ शुभलक्षणलक्षितहस्तयुग, गजराजगतिंगतविघ्नरुजं ॥ जडतामयभेषजमीशवरं, दशनद्युतिद्योतितचारुमुखं ॥ ४ ॥ कनकाचल धीरमभीष्टतरं, रसनारसरंजितसर्वसभं ॥ भुवनत्रयमंगलमोघतरं, रुचिराकृतिमोहितदेवजनं ॥ ५ ॥ अरिहंतमनुत्तरतीर्थकरं, रचितंवरबुद्धिधनंजिनपं ॥ पुरुषोत्तममस्मरमर्थनिधिं, धृतिकांति

निकेतनमभिनुतं ॥ ६ ॥ निजवंशवतंसकमार्तिहरं, रवनिर्जितमेघनदं शिवदं ॥ दयितं भुविविश्वजनीनतमं, नतभूतगणंजितलोभभटं ॥ ७ ॥ शरणाश्रितपालकमुक्तिपदं, दधत वरशातरसं नवमं ॥ महसंभमणिप्रभदेहधरं, धरणेंद्रनिषेवितपार्श्वयुग ॥ ८ ॥ अमम तनुपार्श्वजिनं सततं, तपसाहतसिद्धमनंतवल ॥ ललनाजनसंगविरक्तमलं, मलवर्जित मुत्तरसौख्यधरं ॥ ९ ॥ नवभि:कुलक ॥ सुरराजखेचरनागपुरंदरधरणिराजसुसेवितं, श्रीपार्श्वजिनेश्वरं नमितसुरेश्वरपद्मावतीसंस्तुतं ॥ येऽनंतभक्त्या विशुद्धशक्त्या संस्तुवंति जिन मुदा, शुभसागरपठनाद्भविकरमासमेतं ते लभंति सुखं सदा॥१०॥इति॥ अथ श्रीमहुरपार्श्वाष्टक प्रारंभः ॥ द्रुतविलंबित छंदः ॥ विबुधमानवमानसनंदनं, विभवदानविधौ हरिचंदनं ॥ निखिलसभ्यजनै:कृतवंदनं, भजतपार्श्वजिनं महुराभिधं ॥ १ ॥ युगलकौशिकसाम्यतराशयं, भुवनभानुनिवासघनाश्रयं ॥ विषधिवारणकेसरिसंनिभ, भजतपार्श्वजिनं महुराभिधं ॥ २ ॥ अरुणकोटीविभाधिकभास्वरं, कुमुदबांधवशुभ्रतराननं ॥ वरगभीरगुणोत्तमसागरं, भजत० ॥ ३ ॥ भविकपद्मविभासनभास्करं, जगतिभावप्रकाशनदीपकं ॥ नयनपाटवपावनतंत्रकं, भजत० ॥ ४ ॥ रचितकामठवारिदसंचयै, रखिलधैर्यसमन्वितचेतसं ॥ विकटकर्मसमीरणभोगिनं,भज०॥५॥ कमठनिर्मितपाशुकदंबकैः, स्थिर तरोत्कटभावविराजितं ॥ जगतिदुर्जनसर्पविपापहं, भजत० ॥ ६ ॥ प्रशम भूपणभूपणभूघनं, सुभगभाग्यगुणावलिमंदिरं ॥ धवलकीर्तियशोंवरघासितं, भजत० ॥ ७ ॥ सकलसंघसमीहितकर्तृकं, निचितविघ्नपराभवहर्तृक ॥ अतिशयाद्भुतचारुचरित्रकं भजत०॥८॥

हरिणी छंदः ॥ मह्णुर जिनपं नित्यं वंदे शिवोदधिवर्द्धनं शशिनमनिशं किणवध्वांते दिनेशमहोदय ॥ स्तवनभणने चिताल्हादैः कृतादरसेवके विविधधनदं विश्वे विश्वे जिनेशनताननेे ॥ ए ॥ द्रुतविलंबित छदः ॥ मह्णुरपार्श्वजिनेश्वरसंस्तवं, पठति यः सुधियोषसि नित्यशः ॥ वसति तस्य गृहे कमलाऽखिला, स्थिरतरासुमतां वरदायिनी ॥१०॥ इति ॥ अथ श्रीसत्यपुरीय श्रीमहावीरस्तवनप्रारंभ. ॥ द्रुतविलंबित छंदः ॥ त्वमसि सद्गुणनंदन मंदर, स्त्वमसिमेरुलतावलिमंडपः ॥ त्वमसिखेचरनाकिनरस्तुत, स्त्वमसिरूपवशीकृतविष्टपः ॥ १ ॥ त्वमसियोगिजनौघशिरोमणि, स्त्वमसिकांतिविकाशितदिग्गणः ॥ त्वमसिभाषितरजितनागर, स्त्वमसिसिद्धिवशारतिमोहितः ॥ २ ॥ त्वमसिभद्रकरः करुणालय, स्त्वमसिभक्तचकोरनिशाकरः ॥ त्वमसिदर्शनहर्षितमानव, स्त्वमसिसंसृतिसागरपोतकः ॥ ३ ॥ त्वमसिमोहमहीरुहसुज्ञर, स्त्वमसिधर्मधनोधनकामदः ॥ त्वमसिसंशयवायुभुजंगम, स्त्वमसिदर्शितजीवदयापथः ॥ ४ ॥ त्वमसिधारितशीलविभूषण, स्त्वमसिकामितदामसुरद्रुमः ॥ त्वमसिदेवनराधिपवंदित, स्त्वमसिजाड्यतमिस्रनभोमणिः ॥ ५ ॥ त्वमसिकर्मवनावनिपावक, स्त्वमसिसेवकपूजितपकजः ॥ त्वमसिजन्मजरामृतिवारण, स्त्वमसिशाश्वतमोक्षपदस्थितः ॥ ६ ॥ त्वमसिमंजुलसत्कुलदीपक, स्त्वमसिसर्वपदार्थविशारदः ॥ त्वमसिलोकनतोनतवत्सल, स्त्वमसिदेवशिवीसुखपुष्करः ॥ ७ ॥ त्वमसिनाथमनोहरलक्षण, स्त्वमसिसंमतजीवगणःसदा ॥ त्वमसि संवरमार्गविधायक, स्त्वमसिदानगुणाल्पितकल्पकः ॥ ८ ॥ त्वमसिचित्रकरातिशयांचित, स्त्वमसिसूरितलीश्वरसेवितः ॥ त्वमसि-

ङःखिजनावनतत्पर, स्त्वमसिहारनिज्ञः क्षितिमंमले ॥ ९ ॥ त्वमसिशिष्टनरामरसगत
स्त्वमसिलोकचमत्कृतनिर्ममः ॥ त्वमसिकेवलिसाधुनतोमुदा, त्वमसिकुग्रहदोपनिवारक.
॥ १० ॥ त्वमसिसद्रतज्ञारवृपोपम, स्त्वमसिवीतमदोविशदाशयः ॥ त्वमसितीर्थपतेरुचि-
राह्वय, स्त्वमसिगुप्तिपवित्रितमानसः ॥ ११ ॥ त्वमसिवुद्धिपराजितगीपति स्त्वमसि-
हाटकसन्निज्ञविग्रहः ॥ त्वमसिज्ञाग्यविनाशनिकेतन, स्त्वमसिलोज्ञमहीधरवज्रकः ॥१२॥
त्वमसिसत्ज्ञयार्णवतारक, स्त्वमसिङर्घटसत्यनयाध्वग. ॥ त्वमसिसंमदसंततिकारक,
स्त्वमसिसिद्धिकरोवरदायक· ॥ १३ ॥ त्वमसिविश्वजगज्जनवल्लज्ञ, स्त्वमसिरक्षितजूत
कदंबकः ॥ त्वमसिङर्भगङस्थहरोनिशं, त्वमसिविस्तृतलोचनरंजकः ॥ १४ ॥ त्वमसि
विश्वपतिश्रिसबाधव, स्त्वमसिवक्रतिरस्कृतचङमाः ॥ त्वमसिवैरिसमुङघटोज्ञव, स्त्वम-
सितीर्थकरः प्रतिवोधवः ॥ १५ ॥ त्वमसिज्ञव्यशिखंडिवलाहक, स्त्वमसिवंधुरमूर्तिध-
रोऽजर ॥ त्वमसिसर्वविज्ञुर्विगतातुर, स्त्वमसिसयममंमनमडितः ॥ १६ ॥ त्वमसिशां-
तरसाश्रितचेतन, स्त्वमसिपौरुपनिर्जितकार्मणः ॥ त्वमसिङर्लज्ञवोधिनिवंधन, स्त्वमसि
कामङघाधिकदानद· ॥ १७ ॥ त्वमसिसचितपुण्यनिधिः पर, स्त्वमसि विघ्नसरीसृपगा-
रुड· ॥ त्वमसिशुज्रयशोज्ञरमंदिर, स्त्वमसिसंघजयोन्नतिहर्पदः ॥ १८ ॥ त्वमसिसत्व-
हितोमतिवर्द्धन, स्त्वमसिधर्मसरोजसरः समः ॥ त्वमसिचक्रिनतोज्ञविशेखर, स्त्वमसिपार-
गतः परमेश्वरः ॥ १९ ॥ त्वमसिसत्यपुरामलज्ञूपण, स्त्वमसि संश्रितपादमृगाधिप. ॥
त्वमसिकेवलयुग्मविराजित, स्त्वमसिवीरजिनोजिननायक. ॥ २० ॥ त्वमसिशासनपोत-

॥ ९७ ॥

नियामक, स्त्वमसिसाधुदयालुललामकः॥त्वमसिसौख्यकरस्त्रिशलांगज, स्त्वमसिविश्वगुरुः शुभ्रसागरः ॥ २१ ॥ हरिणी छंदः ॥ जयति सततं वीरः गंभुर्भवोरधिपारगो, जगति तिलकः पापध्वातेगभस्तिरनुत्तरः ॥ कुशलनिलयस्तीर्थस्वामीसुरासुरसंस्तुतो, विदितमहिनांविश्वेविश्वेश्वरार्चितपत्कजः ॥ २२ ॥ वंशस्थ छंदः ॥ कुलावतंसं यतिधर्मदेशकं, कलादिकापारगमंगिपालकं ॥ नवीमि वीरं मतिदं हितावहं मनोर्थसंपादनकामकुंभकं ॥ २३ ॥ भुजंगप्रयात छंदः ॥ प्रभु देववद्यं जिनं विश्वनाथं, जगच्चारुचूडामणि वीरनाथं ॥ स्तुवेऽहं जितारिं नतस्वर्गिनाथं, सदाशातिकारं नरेंद्राधिनाथं ॥ २४ ॥ स्रग्धरा छंदः ॥ श्रीराजं वीरदेवं प्रणतसुरमणि देवमर्त्याधिराजं, कल्याणांभोधिचंद्रौविमलशशधरं भाग्यसौभाग्यकारं ॥ ये भव्याःसंस्तुवंतिप्रतिदिनमनघ चारुभक्त्या त्रिसंध्यं, प्रख्याति ते लभते त्रिभुवनविदितां कीर्तिप्राग्भारकर्त्री ॥ २५ ॥ अथ श्रीवीराष्टकं ॥ तुभ्यं नमः समयधर्मनिवेदकाय, तुभ्यंनमस्त्रिभुवनेश्वरशेखराय ॥ तुभ्यंनमःसुरनरामरसेविताय, तुभ्यंनमो जिनजनार्चितपत्कजाय ॥ १ ॥ तुभ्यंनमोऽभिलपतेहरिचिदनाय, तुभ्यं नमोवरकुलांबरभास्कराय ॥ तुभ्यंनमः प्रणतदेवनराधिपाय, तुभ्यंनमः प्रवररूपमनोहराय ॥ २ ॥ तुभ्यं नमोहरिणनायकनायकाय, तुभ्यं नमोयतिततिप्रतिपालकाय ॥ तुभ्य नमोविकचनीरजलोचनाय, तुभ्यंनमस्तनितनादविराजिताय ॥ ३ ॥ तुभ्यंनमः कुशलमार्गविधायकाय, तुभ्यंनमोविकटकष्टनिषेधकाय ॥ तुभ्यंनमोऽरितरोगचिकित्सकाय, तुभ्यंनमस्त्रिजगतो हृदिभूषणाय ॥ ४ ॥ तुभ्यंनमोदलितमोहतमोभराय, तुभ्यंनमः कनकसन्निभभूघनाय ॥

तुभ्यनमोऽप्यखिलसद्गुणमंदिराय, तुभ्यंनमोमुखकलादितचंडिकाय ॥ ५ ॥ तुभ्यनमोऽत-
तुभ्यनमोऽप्यखिलसद्गुणमंदिराय, तुभ्यंनमोमुखपयोधिवहित्रकाय-
शयाजिविभूषिताय, तुभ्य नमः कुमतितापसुभजनाय ॥ तुभ्यनमोमुखपयोधिवहित्रकाय-
तुभ्यनमोविगतकैतवमत्सराय ॥ ६ ॥ तुभ्यंनमोविदितभव्यजनाशयाय, तुभ्यंनमोनि-
खिलसंशयवारकाय ॥ तुभ्यंनमःप्रथितकीर्तियशोन्विताय, तुभ्यंनमोजितहृषीकसुनीश्वराय ॥
॥ ७ ॥ तुभ्यंनमोप्रमितपुण्यनिर्मिताय, तुभ्यंनमः सकलवाङ्मयपारगाय ॥ तुभ्यंनमो
भविकचातकनीरदाय, तुभ्यनमश्चरणवैभवदायकाय ॥ ८ ॥ कुलकम् ॥ वीराष्टकं पठ-
ति यः सतत त्रिसंध्य, त्यक्त्वा सदा प्रबलमीदृजडःप्रमादं ॥ तद्धाम्निमंक्षुकुरुतेकमलानिवास,
कल्याणसागरभुवामसतामभीष्ट ॥ ए ॥ इति ॥ अथ श्रीलोडणपार्श्वनाथस्तवनप्रारंभः ॥
श्रीकर कष्टहर्त्तार, विधिवादप्रकाशकं ॥ धियातर्जितवागीशं, परमात्मानमन्वहं ॥ १ ॥
क्षमागारं कृपापात्रं, गताधिव्याधिदूषण ॥ भेकतुसर्वकार्येषु, श्रीप्रद दलितामय ॥ २ ॥
धनधान्यकरं लोके, रमाकेलिपदं परं ॥ मर्मतामदमातौघ, मूर्खतादोषवर्जितं ॥ ३ ॥
आर्तिसतापभेत्तार, सूरिश्रेणिशिरोमणिं ॥ रिपुसारगसारग, मंगिनाथनिषेवितं ॥ ४ ॥
तेजसां मंदिरंरम्यं, वारिताशेषदुर्जनं ॥ निःसीमं सर्वगोत्राणां, श्रीमंतं गुणसागरं ॥ ५ ॥
कथिताचारमार्गौघं, कल्याणकमलेविधुं ॥ प्रणताशेषदेवेशं, शासनं कांतभूघनं ॥ ६ ॥
गदितागमसंदोहं, रसनामृतसुंदर ॥ सूराधिकप्रतापालि, स्वियदं दमितेंद्रियं ॥ ७ ॥ नागें-
द्रविबुधैः सेव्यं, लोकाना शांतिकारकं ॥ जडतायाविहेत्तारं, नयतात्हादकारणं ॥ ८ ॥
पालक सर्वसत्वाना, पार्श्वयक्षेणपूजित ॥ नाकिमानववंद्यांघ्रि, नाथनाथजगत्प्रभुं ॥ ए ॥

क्रियासंततिनेतारं, त्रासितानेकदोषक ॥ कृतांतार्थविचारज्ञं, तारतारुण्यराजितं ॥ १० ॥
संसारसागरेपोतं, घस्मराधिविवर्जितं ॥ सर्वज्ञंमेघगम्भीरं हितंविश्वस्यसर्वदा ॥ ११ ॥
तेजोनिधिमुदापार्श्वं, नवीमिलोडणाभिधं ॥ कल्याणसागराख्येन, संस्तुतं ह्यादिमाक्षरैः
॥ १२ ॥ द्वादशभिःकुलकं ॥ श्रीमल्लोढणपार्श्वनाथमवनौ, विख्यातगोत्राभिधं, ये भव्या
वरभावभक्तिसहिताः पूजंति सौख्यार्थिनः ॥ ते सत्वाः सुखमानकीर्तिकलिताः कल्याणतुंगाः
परा, जायंते भुवने प्रतापरुचिरा आदेयवाचः सदाः ॥१३॥ इति ॥ अथ श्रीसेरीशपार्श्वा-
ष्टकप्रारम्भः ॥ कामौघकर्त्तारमशेषदेवा, धीशैस्सदार्चितपादपद्मं ॥ कल्याणकारं वर-
नीलवर्णं, सेरीशपार्श्वंनुथलोडणाख्यं ॥ १ ॥ सत्पुण्यवल्लीवनवारिधारं, निःशेषभव्याव-
लिपूरिताशं ॥ त्रैलोक्यछत्रंभुवनाधिनाथं, सेरीशपार्श्वंनुथलोडणाख्यं ॥ २ ॥ सारंगवाणी
जितचित्तदार्ढ्यं, सारंगगंभीरनिनादकांतं ॥ सारंगसारांबकयुग्मराजं, सेरीश० ॥३॥ विश्वेपु-
सत्वेपुकृपानिधानं, सम्यक्त्वरत्नाभरणांकितांग ॥ ङःस्वांगपर्शुदलितारिवर्गं, सेरीश० ॥४॥
अपारसंसारसमुद्रपोतं, सर्वज्ञमाचारपवित्रवशं ॥ राधांतशास्त्रार्थरहस्यदक्षं, सेरीश०
॥ ५ ॥ वाणीरसानंदितविश्वविश्वं, तीर्थंकर नागपुरेशपूज्यं ॥ सर्वत्रविख्यातयशोभिरामं,
सेरीश० ॥ ६ ॥ तेजोनिधिं कामितकामकुंभं, सौजन्यसौहार्दविलासपात्रं ॥ कल्याणसू-
र्यादिवितानहेतुं, सेरीश० ॥ ७ ॥ आदित्यचंद्राधिकदेहभासं, सत्प्रातिहार्याष्टकराजि-
राजं ॥ स्फाराकृतौमोहितदेवदेवं, सेरीश० ॥ ८ ॥ कलशः ॥ एवं कल्याणवंद्यं त्रिभुवन
तिलकं लोडणार्हसुपार्श्वं, कृत्वैकाग्र्यंस्वचित्ते भवसफलकृते ज्ञानसपत्तिसिद्ध्यै ॥ नित्यंध्यायं-

तिभव्याजिनसमयरताः शुभ्रलेश्याभिरामा, स्तेषांहर्षात्प्रकामं भवति च सदने मंजुपद्मा निवासः ॥ ए ॥ इति ॥ अथ श्रीसंभवनाथाष्टकप्रारम्भः ॥ लावण्यगेह कलहेमवर्णं, वक्षोक्षितं सुदरवाहचिन्हं ॥ लक्ष्मीकलापार्णवधिष्ण्यनाथं, देवैर्नतंसम्भवनाथमीडे ॥ १ ॥ श्येनागजदारुणकर्मशत्रौ, वीरं वरं पूतचरित्रशोभं ॥ क्षेमास्पदंसद्गुणरत्नखानि, देवैर्नतंसंभवनाथमीडे ॥ ७ ॥ इक्ष्वाकुवंशं वरतिग्मरश्मि, राकेंडुवक्र गतवक्रमाद्यं ॥ अज्ञानवेश्वानरशांतिनीर, देवैर्नतं० ॥ ३ ॥ फुःखोदधौपीतसमन्नमिर्ङ सत्प्रातिहार्याष्टकराजिराज ॥ क्षमानिधिं विस्तृतपुण्यमूर्तिं, देवैर्नतं० ॥ ४ ॥ भव्यैर्मुदासेवितपादपद्मं, सज्ञानवज्राहतमोहभूधरं ॥ संसारदावाकुलमर्त्यमेघ, देवैर्नतं० ॥ ५ ॥ सत्कीर्तिपात्रं फुरितारिसेव्यं, गजाननदकरं शरण्यं ॥ कारुण्यसंयुक्तपवेत्रचित्तं, देवैर्नत० ॥ ६ ॥ कुंदार्हदंतं कजलोचनं वै वपु.श्रियातर्जितसूर्यकांतिं ॥ पापान्धकारेऽमलदीपकं तं, देवैर्नत० ॥ ७ ॥ प्रसात्परसेवकस्येप्सितार्थदानेसुरदेववृक्ष ॥ सुखैरनेकैर्युतचारदेहं देवैर्नतं० ॥ ८ ॥ ॥ इत्यष्टकं श्रीजिनसंभवस्य पठति ये मंजुलभावयुक्त्या॥ तेषांगृहे पुण्यनिधानभव्याकाराश्चभवंतिरुध्द्यः ॥ ए ॥ इतिश्रमजिननायकस्य श्रीसूर्यपुरभूषणस्य श्रीसंयाष्टकं संपूर्णं ॥ अथ श्रीमत्प न थस्तवनाष्टकप्रारंभ ॥ ॥ श्रिय· संततेः ... जिविनाथ ... जीवेश

कारक श्रीजीवश मह[illegible]मत्पार्श्वनाथस्तवनाष्टक[illegible]
[illegible] ॥ जनांभोजखंडस्फुटप्रसनाथं, स्तुवे० ॥ ३ ॥ सतां-
मोदपद्मीप्रदानैकहेतुं, महाकूरुविछेदनेधूमकेतु ॥ क्रमेंदीवरालीननागांकनाथं, स्तुवे०
॥ ४ ॥ सनीरांबुदस्यामशिष्टांगकांतिं, सुविस्तारिताविष्टपाशेषशांति ॥ गतान्यूनदोषं वरं
मुक्तिनाथ, स्तुवे० ॥ ५ ॥ नरेंद्रादिवंद्यंसदालब्धयोगं, निशारत्नकंभ्राननं त्यक्तशोकं ॥
कृपाभ्राजनं विश्वदेवाधिनाथ, स्तुवे० ॥ ६ ॥ जगत्तारकदायकं सज्जनानां, श्रियं वांछि-
तार्थपाकं निर्धनाना ॥ सुरम्यस्यरुडनिर्जिताताधिनाथं, स्तुवे० ॥ ७ ॥ कषायाग्रसंतर्पणे-
वारिदान, जराभीरुमातगपचास्यशोभं ॥ विडष्टाष्टकर्मोरगेपत्रिनाथं, स्तुवे० ॥ ८ ॥
इत्येवं श्रीमद्वीरचंद्रशिसुनामल्लुकचंद्रेणजयतुचिरंनुतः पार्श्वजिनवरोविजितमदरागः ॥
इति श्रीमत्पार्श्वनाथस्तवनाष्टकं संपूर्णः ॥ अथ श्रीचिंतामणिपार्श्वनाथजिनस्तोत्र
प्रारम्भः ॥ किं कर्पूरमयं सुधारसमयं किंचिद्ररोचिर्मयं, किंलावण्यमयं महामणिमय
कारुण्यकेलीमय ॥ विश्वानंदमयं महोदयमयं शोभामयं चिन्मय, शुक्लध्यानमयं
वपुर्जिनपतेर्भूयाद्भवालं ॥ १ ॥ पातालं कलयनधरा धवलयन्नाकाशमापूरयन्, दिक्चक्रं
क्रमयनसुरासुरनरश्रेणिंचविस्मापयन् ॥ ब्रह्मांडं सुपुवन्जलानिजलधेः फेनछलाल्लोलयन्,
श्रीचिंतामणिपार्श्वसम्भवयशोहंसश्चिर राजते ॥ २ ॥ पुण्यानां विपणिस्तमोदिनमणिः
कामेनकुंभसृणिर्मोक्षेतिः सरणिः सुरेन्द्रकरणिज्योतिः प्रभासारणिः ॥ दानेदेवमणिर्नतो-
त्तमजनिश्रेणिकृपासारणि, विश्वानंदसुधाघृणिर्भवभिदे श्रीपार्श्वचिंतामणिः ॥ ३ ॥
श्रीचिंतापार्श्वविश्वजनतासंजीवनं त्वंमया दृष्टस्तात ततः श्रियः समभवन्नाशक्रमाचक्रिणः ॥

मुक्तिः क्रीमतिहस्तयोर्वहुविधं सिद्धमनोवांछितं डुर्देवं डुरितं च डुर्दिनजयं कष्टं प्रणष्टं मम ॥ ४ ॥ यस्यप्रौढतमप्रतापतपतपनः प्रोधामधामाजगजघालः कलिकायकेलिदलनोमोहांधविध्वंसकः ॥ नित्योद्योतपरं समस्तकमलाकेलीगृहं राजते सश्रीपार्श्वजिनोजनेहितकर्तोचिंतामणिः पातु मां ॥ ५ ॥ विश्वव्यापितमोहिनस्तितरणिर्वालोऽपिकल्पांकुरोदारिद्राणिगजावलिं हरिशिशुःकाष्टानिवह्नेः कणः॥पीयूषस्यलवोपिरोगनिवहं यद्धतथातेविज्ञोमूर्तिः स्फूर्तिमतीसतीत्रिजगतीकष्टानिहर्तुंक्षमा ॥ ६ ॥ श्रीचिंतामणिमंत्रमोंकृतियतंह्रींकारसाराश्रित श्रीमर्हनमिऊणपासकलितं त्रैलोक्यवश्यावहं ॥ द्वेधाज्ञूतविषापहं विषहरः श्रेय प्रजावासाद सोल्लासं वसुहांकितं जिनफुलिंगानदनंदेहिनं ॥ ७ ॥ ह्रींश्रीकारवर नमोक्षरपर ध्यायंतियेयोगिनो हृत्पद्मेविनिवेश्यपार्श्वमधिपं चिंतामणिसंज्ञकं ॥ जालेवामज्ञुजेचनाज्ञिकरयोर्ज़ूयोज्ञुजेदक्षिणे पश्चादष्टदलेपुतेशिवपदं द्वीत्रैज्ञवैर्यंत्यहो ॥ ८ ॥ नोरोगानैवशोकानकलहकलनानारिमारीप्रचाराः नैवांध्यंनासमाधर्निचडुरडुरितेडुष्टदारिद्रतानो नोशाकिन्योग्रहानोनहरिकरिगणव्यालवेतालजाला जायंतेपार्श्वचिंतामणिनतिवशतः प्राणिनां ज्ञक्तिज्ञाजा ॥ ९ ॥ गीर्वाणड्डुमधेनुकुंजमणयः स्वस्यांगणेरंगीणो देवादानवमानवाः सविनयः तस्मैहितं ध्यायनः ॥ लक्ष्मीस्तस्यवशावशेवगुणिनां ब्रह्मांडसंस्थापिनी श्रीचिंतामणिपार्श्वनाथमनिशं संस्तौतियोध्यायसि ॥ १० ॥ इतिजिनपतिपार्श्वपार्श्वपार्श्वाख्ययक्षः प्रदलितडुरितौघः प्रीणितः प्राणिसंघः ॥ त्रिज्ञुवनजनवांछादानचिंतामणिकः शिवपदतरुबीजं बोधददातु ॥ ११ ॥ इति संपूर्णः ॥ ॥ अथ श्रीपार्श्वजिनस्तुतिप्रारंज ॥ लक्ष्मीर्मह-

स्तुत्यसतीसतीसती प्रनृष्कालोविरतोरतोरतो, जरारुजापदमहृताहृताहृता पार्श्वफणेरामगिरौगिरौगिरौ ॥ १ ॥ अर्च्चयमाद्यसुमनामनामना, यःसर्वदेशेपुविनाविनाविना ॥ समस्तविज्ञानमयोमयोमयो, पार्श्वफणेरामगिरौगिरौगिरौ ॥ २ ॥ व्यनिष्टजतोःशरणंरणंरणं, क्षमादितोयःकमठमठमठं ॥ नरामरारामक्रमक्रमक्रमं, पार्श्वफणे० ॥ ३ ॥ अज्ञानसत्कामलतालतालता, यदीयसद्भावनतानतानता ॥ निर्वाणसौख्यं सुगतागतागता, पार्श्वफणे० ॥ ४ ॥ विवादिशाशेषविधिर्विधिर्विधिः, बन्नूवसर्वाबहरिर्हरीहरी ॥ विज्ञानसंज्ञानहरोहरोहरो, पार्श्वफणे० ॥ ५ ॥ यद्विश्वलोकैकगुरुं गुरु गुरुं, विराजितायेनवरं वरं वर ॥ तमालनीलागजरं जरं जरं, पार्श्वफणे० ॥ ६ ॥ संरक्षितोदिग्भुवनं वनं वनं, विराजितायेपु दिवैदिवैदिवै ॥ पादद्वयेनूतसुरासुरासुराः, पार्श्वफणे० ॥ ७ ॥ रराजनित्यंसकलाकलाकला, ममारतृष्णोदजिनोजिनोजिनो ॥ संहारपूज्यं वृषभासभासभा, पार्श्वफणे० ॥ ८ ॥ तर्के व्याकरणे च नाटकचये काव्याकुले कौशले, विख्यातो भुवि पद्मनंदिमुनिपस्तत्वस्यकोशं निधिः ॥ गम्भिरं यमकाष्टकं भणति यः शं भूयसा लभ्यते,श्रीपद्मप्रभदेवनिर्मितमिदं स्तोत्रं जगन्मगलं ॥ ९ ॥ इतिश्रीपार्श्वजिनस्तुतिःसपूर्णं ॥ ॥ श्रीगौडिशपार्श्वप्रभुस्तवनप्रारंभः ॥ सकलभविकचेतःकल्पनाकल्पवल्ली ॥ गहनवनवितानं प्रोज्ञ्वलाखिवादं ॥ फणिपतिकलितांह्रीचारुगौडीपुरेशमनणुगुणनिधानं पार्श्वनाथं नवामि ॥ १ ॥ विधुधनतविभोते पूवदीदार पाया, सुगुरुभिरपिसम्यक् देवतूंहीबताया ॥ जिनतवपरिकर्मी आजहोंताजकीमें, परिरमतिमनोमे पासकीआसिकीमे ॥ २ ॥ शिरसिममसिनाचेद्‌जोहुवेदस्ततेरा, भुवनजनचम-

त्कृत् तौपुलैवप्तमेरा ॥ जयतिजयिप्रतापःपासजीकाङनीमे, चतुरनिकरवक्रात् सिफ्ततेरी सुनीमे ॥ ३ ॥ त्वमसिममविधाता तूंहिमादरूपिदरूतुं, कुरुमङपरितूर्णं दोस्तसीधीनिजर्तु ॥ कलयतिमनुजन्मा यारतारीफकेती, त्तवत्रिजुवनराजो जोत्तुजाएकसेति ॥४॥ अनिमिषप्रणताहे मातवामाकेनंदा, त्वमसिममशरण्यस्तेंप्रजूजीहुंबंदा ॥ त्वमपियदिमदीया अरज्दिल्मेंनल्यावे, नवतसकतमोन्यो दादजिस्पासजावे ॥ ५ ॥ नहिनहिविदितास्तेककुगुनहकीकमीमें, सहनजतत्वदात्रो नांहिअस्मानजमीमे ॥ परमतमकृपालो गुनहवगसीसकीजै, नृपतिमहिमजैत्री मौजमहाराजदीजै ॥ ६ ॥ स्थलपतिपुरतोहो औरकोदेवकैसा, जनयतिकिलवादं क्यारुपैयेसुपैसा ॥ लसतिजुवनजर्तु नूरआफ्ताफजैसा, स्फुरतितवतरस्ते मर्दगाजीहमेसां ॥ ७ ॥ समुदितनवतेजःश्रीधवलधिंगदेवा, भृशमुपतनुतते नाथहरेरोजसेवा ॥ मयिजिनपघनल्विट् किजीइंऐसीनेकी, अलमहमिहदया जैसीनौवत्फतेकी ॥ ८ ॥ कलशः ॥ इत्थश्रीपुरुहूतवंदितपदोगौडीपुरालंकृति, र्वामाकुक्षिसरःसरोरुहसमः श्रीपार्श्वनाथप्रजुः ॥ श्रीमत्पारकराख्यराष्ट्रसुंदरीसिंहःकृपाणानिधि, र्विश्वाहर्मणिरश्वसेनतनुजूर्विद्यार्णवःसंस्तुतः ॥ ए ॥ ॥ इतिश्रीगौडीशपार्श्वप्रजुस्तवनंश्रीविद्यासागरसूरिविरचितं संपूर्ण ॥ ॥ अथश्रीरत्नाकरपच्चीसीप्रारजः ॥ ॥ श्रेयःश्रियांमंगलकेलिसद्म, नरेंद्रदेवेंद्रनतांह्रिपद्म ॥ सर्वज्ञसर्वातिशयप्रधान, चिरंजयज्ञानकलानिधान ॥ १ ॥ जगत्रयाधारकृपावतार, दुर्वारसंसारविकारवैद्य ॥ श्रीवीतरागत्वयिमुग्धजावा, द्विज्ञप्रजोविज्ञपयामिकिंचित् ॥२॥ किंबाललीलाकलितोनबाल, पित्रोःपुरोजल्पतिनिर्विकल्प ॥ तथायथार्थं-

कथयामि नाथ, निजाशयं सानुशयस्तवाग्रे ॥ ३ ॥ दत्तं न दानंपरिशीलितंच, न शालिशी-
लं न तपोभितप्तं ॥ शुभो न भावोप्यभवद्भवेऽस्मिन्, विभो मयाभ्रांतमहोमुधैव ॥ ४ ॥
दग्धोऽग्निना क्रोधमयेन दष्टो, दुष्टेन लोभाख्यमहोरगेण ॥ ग्रस्तोऽभिमानाजगरेणमाया,
जालेनबद्धोस्मि कथंभजेत्वा ॥ ५ ॥ कृतंमयामुत्रहितंनचेह, लोकेऽपिलोकेशसुखंनमेऽभूत् ॥
अस्मादृशांकेवलमेवजन्म, जिनेशजज्ञेभवपूरणाय ॥ ६ ॥ मन्येमनोयन्नमनोज्ञवृत्त, त्वदा-
स्यपीयूषमयूखलाभात् ॥ द्रुतंमहानंदरसंकठोर, मस्मादृशांदेवतदश्मतोपि ॥ ७ ॥ त्वत्तः
सुदुःप्राप्यमिदंमयाप्तं, रत्नत्रयंभूरिभवभ्रमेण ॥ प्रमादनिद्रावशतोगतंतत्, कस्याग्रतो
नायकपूत्करोमि ॥ ८ ॥ वैराग्यरंगःपरवंचनाय, धर्मोपदेशोजनरंजनाय ॥ वादायविद्या-
ध्ययनचमेऽभूत्, कियद्ब्रुवेहास्यकरंस्वमीश ॥ ९ ॥ परापवादेनमुखंसदोषं, नेत्रंपरस्त्रीज-
नवीक्षणेन ॥ चेतःपरापायविचिंतनेन, कृतंभविष्यामिकथंविभोह ॥ १० ॥ विडंबितं-
यत्स्मरघस्मरार्त्ति, दशावशात्स्वंविषयांधलेन ॥ प्रकाशितं तद्भवतोह्रियैवा, सर्वज्ञसर्वस्वय-
मेवचेतिसा ॥ ११ ॥ ध्वस्तोन्यमंत्रैःपरमेष्ठिमंत्रः कुशास्त्रवाक्यैर्निहतागमोक्तिः ॥ कर्तुंवृ-
थाकर्मकुदेवसंगा, दवाञ्छिहीनाथमतिभ्रमोमे ॥ १२ ॥ विमुच्यदृग्लक्ष्यगतंभवंतं, ध्याता-
मयामूढधियाहृदंतः ॥ कटाक्षवक्षोजगभीरनाभी, कटितटीयाःसुदृशांविलासाः ॥ १३ ॥
लोलेक्षणावक्त्रनिरीक्षणेन, योमानसेरागलवोविलग्नः ॥ नशुद्धसिद्धांतपयोधिमध्ये, धौतो-
प्यगात्तारककारणंकिं ॥ १४ ॥ अंगंनचंगंनगुणोगुणानां, न निर्मलःकोऽपिकलाविलासः ॥
स्फुरत्प्रधानप्रभुताचकापि, तथाप्यहंकारकदर्थितोऽहं ॥ १५ ॥ आयुर्गलत्याशुनपापबुद्धि,

गेतंवयोनोविपयान्निलापे ॥ यत्नश्चन्नेषज्यविधौनधर्मे, स्वामिन्महामोहविडवनामे ॥१६॥ नात्मानपुण्य न न्नवो न पापं, मयाविटानाकटुगीरपीय ॥ आधारिकर्णौत्वयिकेवलार्केपुरस्फुटेसत्यपिदेवधिग्मां ॥ १७ ॥ न देवपूजा न च पात्रपूजा, नश्राद्धधर्मश्चनसाधुधर्मः ॥ लब्ध्वापिमानुष्यमिद समस्तं, कृत मयारण्यविलापतुल्य ॥ १८ ॥ चक्रेमयासत्स्वपिकामधेनु, कल्पद्रुचिंतामणिपुस्पृहार्त्तिः ॥ नजैनधर्मेस्फुटशर्मदेपि, जिनेशमेपश्यविमूढन्नावं ॥ १९ ॥ सन्नोगलीलानचरोगकीला, धनागमोनोनिधनागमश्च ॥ दारानकारानरकस्यचित्ते, व्यचिंतितिनित्य मयकाधमेन ॥ २० ॥ स्थितंनसाधोहृदिसाधुवृत्त्या, परोपकारान्नयशोर्जितिंच ॥ कृतंनतीर्थोद्धरणादिकृत्यं मयामुधाहारितमेवजन्म ॥ २१ ॥ वैराग्यरगो नगुरुदिनेषु, नडुर्जनानां वचनेषु शांतिः ॥ नाध्यात्मलेशो मम कोऽपिदेव, तार्यःकथं कारमयं न्नवाब्धि ॥२२॥ पूर्वेन्नवेकारिमयानपुण्य, मागामिजन्मन्यपिनोकरिष्ये ॥ यदीदृशोहं ममतेननष्टा, न्नूतोन्नवद्भाविन्नवत्रयीश ॥ २३ ॥ किंवासुधाहं बहुधासुधाभुक्, पूज्यत्वदग्रेचरित स्वकीय ॥ जल्पामियस्मात्रिजगत्स्वरूपनिरूपकस्त्वं कियदेतदत्र ॥ २४ ॥ दीनोद्धारधुरधरस्त्वदपरोनास्तेमदन्यःकृपा, पात्रं नात्रजिनेजिनेश्वरतथाऽप्येतानयाचेश्रियं ॥ कित्वर्हन्निदमेवकेवलमहोसद्बोधिरत्नशिव, श्रीरत्नाकरमंगलैकनिलयश्रेयस्करंप्रार्थये ॥ २५ ॥ ॥ इतिश्रीसाधारणजिनस्तवनं श्रीरत्नाकरसूरिविरचितं संपूर्णं ॥ ॥ अथ नवकारनोछद प्रारंन्नः ॥ ॥ दोहा ॥ वंछितपूरेविविधपरें, श्रीजिनशासनसार ॥ निश्चेंश्रीनवकारनित, जपताजयजयकार ॥ १ ॥ अडसठअक्षरअधिकफल नवपदनवेनिधान ॥ वीतरागस्वयं

सुखवदे, पंचपरमेष्टिप्रधान ॥ २ ॥ एकज अक्षर एकचित्त, समर्यां संपति थाय ॥ संचित सागरसातना, पातक दूर पलाय ॥ ३ ॥ सकलमंत्रशिरमुकुटमणि, सद्गुरुभाषितसार ॥ सोभवियामनशुद्धशुं, नित जपियें नवकार ॥ ४ ॥ छेदहाटकीनवकारथकी श्रीपालनले-शर ॥ पाम्योराज्यप्रसिद्ध ॥ समशानविषेशिवनामकुमरनें, सोवनपुरिसोसिद्ध ॥ नव-लाख जपंतां नरक निवारे, पामे भवनो पार ॥ सोभवियांभत्तेंचोखेंचित्तें, नित्यजपियें नवकार ॥५॥ बाधी वडशाखा शिंके वसि, हेठल कुंड हुताश ॥ तस्करनें मंत्र समर्प्यो श्रावकें, ऊड्यो ते आकाश ॥ विधिरीत जप्यो विषधर विष टाले, ढाले अमृतधार ॥ सो० ॥६॥ बीजोरां कारण राय महाबल, व्यतर दुष्ट विरोध ॥ जेणे नवकारें हत्या टाली, पाम्योयक्षप्रतिबोध ॥ नवलाखजपताथाएजिनवर इरयोछेअधिकार ॥ सो० ॥ ७ ॥ पल्लिपतिशीख्योमुनिवर पासे, महामंत्रमनशुद्ध ॥ परभवतेराजसिंहपृथ्वीपति, पाम्योपरिगलशुद्ध ॥ एमंत्रथ-की अमरापुर पहोतो, चारुदत्तसुविचार ॥ सो० ॥ ८ ॥ सन्यासीकाशीतपसाधंतो, पंचा-ग्निपरजाल ॥ दीठोश्रीपासकुमारेपन्नग, अधबलतोतेटाल ॥ संभलाव्योश्रीनवकारस्व-यंमुख, इंद्रभुवनअवतार ॥ सो० ॥९॥ मनशुद्धे जपतां मयणासुंदरी, पामी प्रियसंयोग ॥ इणध्याने कष्ट टल्युं उंबरनुं, रक्तपित्तना रोग ॥ निश्चेंशुं जपतां नवनिधि थाये, धर्मतणो आ-धार ॥ सो० ॥ १० ॥ घटमांहि कृष्णभुजंगम घाल्यो, घरणी करवा घात ॥ परमेष्टिप्रभा-वेहारफूलनो, वसुधामांहिविख्यात ॥ कमलावतीयें पिंगल कीधो, पापतणो परिहार ॥ ॥ सो० ॥ ११ ॥ गयणांगणजातिराखीग्रहीने, पाडीवाणप्रहार ॥ पदपंचसुणंतांपाडुप-

तिघर, ते थइ कुंता नार ॥ ए मंत्र अमूलक महिमामंदिर, भवदुःखभंजणहार ॥ सो० ॥ १२ ॥ कंबलसंबलकादवकादया, शकटपाचगेमान ॥ दीधेनवकारें गया देवलोकें, विलसे अमरविमान ॥ एमंत्रथकी सपति वसुधातलें, विलसेजेनविहार ॥ सो० ॥ १३ ॥ आगें चोवीशी हुइ अनंति, होशे वारअनत ॥ नवकारतणी कोइ आदि न जाणे, इम भाखे अरिहंत ॥ पूरवदिशिचारे आदिप्रपंचे, समर्यां सपतिसार ॥ सो० ॥ १४ ॥ परमेष्टिसुरपद ते पण पामे, जे कृतकर्मकठोर ॥ पुंडरगिरि उपर प्रत्यक्ष पेख्यो, मणिधर ने एकमोर ॥ सद्गुरुनेसन्मुखविधिसमरंता, सफलजन्मससार ॥ सो० ॥ १५ ॥ शूलिकारोपणतस्करकीधो लोहखरोपरसिद्ध ॥ तिहांशेठेनवकारसुणाव्यो, पाम्योअमरनीऋद्ध ॥ शेठने घर आवी विघ्ननिवार्यां, सुरे करी मनोहार ॥ सो० ॥ १६ ॥ पंचपरमेष्टिज्ञानजपंचह, पंचदानचारित्र ॥ पंचसवायमहाव्रतपंचह, पंचसुमतिसमकित्त ॥ पंचप्रमादहविषयतजोपंच, पालोपंचाचार ॥ सो० ॥ १७ ॥ कलश छप्पय ॥ नितजपियेंनवकारसारसंपतिसुखदायक ॥ शुद्धमंत्र ए शाश्वतो इम जंपे श्रीजगनायक ॥ श्रीअरिहंतसुसिद्ध, शुद्धआचार्यभणीजें ॥ श्रीउवझायसुसाधु, पंचपरमेष्टिथुणीजे ॥ नवकारसारससारछे, कुशललाभ वाचक कहे ॥ एकचित्तें आराधता, विविधऋद्धिवंछितलहे ॥ १८ ॥ ॥ इतिश्रीनवकारछंदसंपूर्णः ॥ ॥ अथ पंचपरमेष्टिस्तोत्रप्रारंभः ॥ दुहा ॥ सुपकारणभवियण । समरो नित नवकार ॥ जिनसासनआगम । चउदपुरवनोसार ॥ १ ॥ इणे मंत्रे महिमा, कहितां न लहुं पार ॥ सुरतरुमन संचित, वंछितफलदातार ॥ २ ॥ सुरदानवमानव, सेवकरेकरजोडी ॥ भूमंडलविचरें,

तारिन्नवियणकोडि ॥ ३ ॥ सुरहंदेविलसें, अतिशयजासअनंत ॥ पहिलेपदनमिउं, अरिगंजणअरिहंत ॥ ४ ॥ जेपंनरेन्नेदें, सिद्धथयान्नगवंत ॥ पंचमिगत्तिपोहता, अट्ठकरमकरिअंत ॥ ५ ॥ कलअकलस्वरुपी, पंचानंदकदेह ॥ सिद्धापयप्रणमुं, वीजेपदवलीएह ॥ ६ ॥ गछन्नारधुरंधर, सुंदरससीहरसोम ॥ करेंसाधारणवारण, गुणछित्तिसयतोम ॥ ७ ॥ सुतजाणसिरोमणि, सायरजेमगंन्नीर ॥ त्रीजेपदनमीइं, आचारजगिरधीर ॥ ८ ॥ सुत्तधरगुणधरआगल, शुत्रन्नणावेंसार ॥ तपविधस्युंजोवें, न्नांखेअरथविचार ॥ ९ ॥ मुनिवरगुणजुत्ता, तेकिहिंउवझाय ॥ चउथेंपदनमीइं, अहनिशतेहनापाय ॥ १० ॥ पंचाश्रवटालें, पालेंपंचाचार ॥ तपसीगुणधारी, वारिविषयविकार ॥ ११ ॥ त्रसथावरपीहर, लोकमांहिजेसाध ॥ त्रिविधेंतेप्रणमुं, परमारथजिणेंलाध ॥ १२ ॥ अरीकरीहरीडायणी, सायणीन्नूतवेताल ॥ सर्वेपापपणासे, थासेंमंगलमाल ॥ १३ ॥ इणेंसमरणसंकट, कष्टटलेंततकाल ॥ जेजंपेंइमजिनप्रन्नु, सुरवीरसीसरसाल ॥ १४ ॥

॥ इतिश्रीपंचपरमेष्टिस्तोत्रसंपूर्णं ॥ ॥ अथगौतमस्वामीनोरासप्रारंन्नः ॥ प्रथमन्नाषा ॥

वीरजिणेसरचरणकमल, कमलाकयवासो ॥ पणमविपभणिसुंसामिसाल, गोयमगुरुसारो ॥ मणतणुवयणएकंतकरवी, निसुणोन्नोन्नवियां ॥ जिमनिवसेतुह्मदेहगेह, गुणगणगहगहिया ॥ १ ॥ जंबूदीवसिरिन्नरहखित्त, खोणीतलमंडण ॥ मघधदेशसेणियनरेश, रिउदलवलखंडण ॥ धणवरगुव्वरगामनाम, जिहांजणगुणसज्जा ॥ विप्पवसेवसुन्नूइतत्थ, जसुपुहवीन्नज्जा ॥ २ ॥ तांणपुत्तसिरिइंदन्नूइ, न्नूवलयपसिद्धो ॥ चउदहविद्याविविहरुप

नारीरसविश्वो ॥ विनयविवेकविचारसार, गुणगणहमनोहर ॥ सातहाथसुप्रमाणदेह रुपेंरजावर ॥ ३ ॥ नयणवयणकरचरणजिण, विपंकजजलपीडीय ॥ तेजेताराचंदसूर, आकाशजमाभिय ॥ रूवेंमयणंअनगकरवी, मेल्हिउं निरधाडीय ॥ धीरमेंमेरुगंभीरसिधु चगमचयचाडीय ॥४॥ पेखविनिरुवमरुवजास, जिणजपेकिंचिय ॥ एकाकीकिलभीतइत्थ, गुणमेल्हासंचिय ॥ अहवानिश्चेंपुव्वजम्मजिणवरइणअंचिअ ॥ रंभापउमागउरीगगा, रतिहाविधिवंचीय ॥ ५ ॥ नहिवुधनहिंगुरुकविनकोइ, जसुआगलरहिउं ॥ पंचासया-गुणपात्रगत्राहिंडेपरवरिउं ॥ करेनिरंतरयज्ञकर्ममिथ्यामतिमोहिय ॥ इणछलहोसेचर-मनाण, दंसणहविसोहिय ॥ ६ ॥ वस्तु छंद ॥ जंवूदीवहजंवूदीवहभरहवासंमि, खोणि-तलमंडणो ॥ मगधदेससेणीयनरेसर, वरगुवरगामतिहां ॥ विप्पवसेवसुभूइसुदर, तसु-भजापुहवीसयल ॥ गुणगणरूवनिहाण, ताणपुत्तविद्यानिलउं, गोयमअतिहिसुजाण ॥ ७ ॥ द्वितीयभाषा ॥ चरमजिणेसरकेवलनाणी, चउविहसंघपइठाजाणी ॥ पावा-पुरसामीसंपत्तो, चउविहदेवनिकायेंजुत्तो ॥ ८ ॥ देवेंसमवसरणतिहांकीजें, जिणदीठे मिथ्यामतिखीजे ॥ त्रिभुवनगुरुसिंहासणवइठा, ततखिण मोहदिगंतेपइठा ॥ ९ ॥ क्रोधमानमायामदपूरा, जायेनाठाजिमदिनचोरा ॥ देवडुंदुहिआकाशेंवाजी, धरमनरे-सरआविउगाजी ॥ १० ॥ कुसुमवृष्टिविरचेतिहदेवा, चाशठइन्द्रजसुमागेसेवा ॥ चामर छत्रसिरोवरिसोहे, रुपेजिणवरजगसहुमोहे ॥ ११ ॥ उवसमरसभरभरीवरसंता, जोजन वाणिवखाणकरंता ॥ जाणविवर्द्धमाणजिणपाया, सुरनरकिन्नरआवेराया ॥ १२ ॥

कतिसमूहेंऊलदलकंता, गयणविमाणेरणरणकंता ॥ पेखवि इंदभूइ मनचिंते, सुरआवेअम्हजगन होवंते॥१३॥तीर तंरफक जिम ते वहता,समवसरण पहोता गहगहता ॥ तो अभिमानें गोयमजंपे, इण अवसरें कोपें तणु कंपे ॥१४॥ मूढलोक अजाणीउं वोले ॥ सुर जाणंता इम कांइ डोले ॥ मू आगल कोइ जाण भणिजें, मेरु अवर केम उपमादीजें ॥१५॥ वस्तु छंदः ॥ वीरजिणवर वीरजिणवर नाणसंपन्न, पावापुरि सुरमहिपत्तनाहसंसारतारण॥तिहिं देवेहिं निम्मवियसमवसरणबहुसुक्खकारण ॥ जिणवरजगउज्जोयकरे तेजेंकरिदिनकार ॥ सिंहासणसामियठविउं हुउंसुजयजयकार ॥ १६ ॥ तृतीयभाषा ॥ तोचढिउंघणमाणगजे, इंदभूई भूयदेवतो ॥ हुंकारो करीसंचरिउं कवण सुजिणवरदेवतो ॥ १७ ॥ जोजनभूमिसमोसरण पेखवी प्रथमारंभतो ॥ १८ ॥ मणिमयतोरणदंडधज, कोसीसेनवघाटतो, वयरविवर्जितजंतुगण, प्रातिहारजआठतो ॥ १९ ॥ सुरनरकिन्नरअसुरवर, इंदइंदाणिरायतो ॥ चित्तचमक्कियचिंतवेए सेवता प्रभुपायतो ॥ २० ॥ सहसकीरणसम वीरजिण पेखवी रूपविसालतो, एहअसंभवए, साचोए इंद्रजालतो ॥२१॥ तोबोलावेत्रिजगगुरु, इंदभूईनामेणतो ॥ श्रीमुख संसय सामी सवे, फेडे वेदपणतो ॥ २२ ॥ मानमेल्हि मदठेलीकरे, भगतेंनामेसीसतो ॥ पंचसयासुं व्रतलिउंए, गोयमपहिलोसीसतो ॥ २३ ॥ बधवसंजमसुणविकरे, अगिनिभूईआवेइतो ॥नाम लेइ आभाषकरे, तंपुणप्रतिबोधेइतो ॥ २४ ॥इणि अनुक्रमें गणहररयण,थाप्या वीर इग्यारतो॥ तोउपदेशें भुवनगुरुं, संजमसुंव्रत वारतो ॥ २५ ॥ विहुं उपवासे पारणुंए, आपणपें विहरंततो ॥ गोयमसंजमजगस-

यल, जयजयकार करंतलो ॥२६॥ वस्तु वंद ॥ ॥ इंदभूइ इंदभूइ चढिय बहुमान, हुंकारोकरकंपतो समवसरण पुहतो तुरंतो ॥ इह संसार सामी सवे, चरमनाहफेडेफुरंतो ॥ वोध वीजसज्झायमनेगोयमभवहविरत्त ॥ दिख लेइ सिक्खासहिय, गणहरपयसंपत्त ॥ २७ ॥ चतुर्थभाषा ॥ आजहुओसुविहाण, आजपचेलिमांपुण्णभरो ॥ दीठ गोयमसामि,जोनियनयणे अमियभरो ॥ २८ ॥ सिरिगोयमगणहार, पंचसयासुनिपरवरिय ॥ भूमियकरयविहार, भवियां जन पडिबोह करे ॥ २९ ॥ समवसरणमझार, जे जे संका उपजेए ॥ ते ते परउपगार, कारण पूछे मुनिपवरो ॥३०॥ जिहाजिहां दीजे दिख्ख, तिहां तिहां केवल उपजेए॥ आपकन्हेअणहुंत, गोयम दीजे दान इम ॥ ३१ ॥ गुरुउपरगुरुभत्ति, सामिगोयमउपनिय ॥ इणछलकेवलनाण, रागजराखेरंगभरें ॥ ३२ ॥ जोअष्टापदशैल,वंदे चढि चउविसजिण ॥ आतमलब्धिविसेण, चरमसरीरीसाइमुनि ॥ ३३ ॥ इअदेसणनिसुणेइ, गोयमगणहरसंचलिउं ॥ तापसपन्नरसएण, तोमुनिदीठेआवतोए ॥ ३४ ॥ तवसोसियनियअंग, अह्मसक्तिनविउपजेए ॥ किम चढसे दढकाय, गज जिम दिसे गाजतोए ॥३५॥ गिरुउं ए अभिमान, तापस जो मन चिंतवेए ॥ तो मुनि चढिउंवेग, आलंबविदिनकरकिरण ॥ ३६ ॥ कंचणमणिनिप्पन्न, दंडकलसधजवडसहिय ॥ पेखवी परमाणंद, जिणहर भरहेसर महिअ ॥ ३७ ॥ नियनियकायप्रमाण, चउदेसिसंठिअजिणहबिंब ॥ पणमवि मन उल्लास, गोयम गणहर तिहांवसिय ॥ ३८ ॥ वयरसामिनो जीव, तिर्यकजृंभकदेव तिहां ॥ प्रबोधे पुंडरीक, कंडरीक अध्ययन भणी ॥ ३९ ॥ वलता गोयमसामि, सवि तापस

